PRACYAVANI SANSKRIT TEXTS
Vol. XXXXII

# "SAMKARA-SAMKARAM"

( "Samkara, the Supremely Auspicious )
( A Modern Sanskrit Drama on the holy life of
Sri Samkaracarya )



## शङ्कर-शङ्करम्

By

Dr. ( Mrs ) Roma Chaudhuri, M. A. D. Phil (Oxford),
F. A. S. B.
Formerly, Principal, Lady Brabourne College,
Govt. of West. Bengal, Calcutta,
Now, Vice-Chancellor, Ravindra Bharati University,
Calcutta,
and Founder-Secretary, "Pracyavani"
( Institute of Oriental Learning )
Calcutta

January, 1972

Published By—Dr. Roma Chaudhuri
For
PRACYAVANI
( Institute of Oriental Learning )
3, Federation Street, Calcutta-9.

Available from the
PRACYAVANI
Address as above

SANSKRIT PUSTAK BHANDAR
38, Cornwallis Street, Calcutta-9.

DAS GUPTA & CO.
54/3, College Street, Calcutta-12.

CHOWKHAMBA SANSKRIT SERIES OFFICE
Banaras City.

MOTILAL BANARASI DAS
P. B. 75, Chowk, Banaras City
Or,
Jawaharnagar, New Dehli.

MUNSHIRAM MANOHARLAL
P B, 1165, Nai Sarak, Dehli-6.

Printed by—Dr. Roma Chaudhur
3, Federation Street, Calcutta—9



Bound-: Rs. 7. only. Price Rs. 5 only.

# PRACYAVANI SANSKRIT TEXTS
Vol. XXXXII

## "SAMKARA-SAMKARAM"

( "Samkara, the Supremely Auspicious )
( A Modern Sanskrit Drama on the holy life of
Sri Samkaracarya )




## शङ्कर-शङ्करम्

By

Dr. ( Mrs ) Roma Chaudhuri, M. A. D. Phil (Oxford),
F. A. S. B.
Formerly, Principal, Lady Brabourne College,
Govt. of West. Bengal, Calcutta,
Now, Vice-Chancellor, Ravindra Bharati University,
Calcutta,
and Founder-Secretary, "Pracyavani"
( Institute of Oriental Learning )
Calcutta

January, 1972

## BLESSINGS

I have really, no words to express sufficiently my deep sense of appreciation for the most laudable enterprises of our beloved Dr. Roma Chaudhuri for the propagation and popularisation of Sanskrit Learning and Literature through such universally popular and joyous means as the staging of easily intelligible and eternally inspiring Sanskrit Dramas, all over India, also outside. This has always been recognised in India as one of the most fruitful means of mass education and culture, serving more purposes than one; viz, bringing before all the ever-luminous lives of great men and women, all over the world, in a way at once instructive and interesting; creating a taste for Fine Arts, of a high calibre, like Music, Dance, Play-Acting, Decorating, Directing, Management and the like; cultivating a sense for Language and Literature; and so on. But who could have ever thought that even Sanskrit Dramas, generally supposed to be very difficult dead language Dramas, could be made so very popular and so very attractive to all, scholars and laymen, Sanskritists and non-Sanskritists, Indians and foreigners alike, with equal glory and grandeur, equal sweetness and softness, equal serenity and sublimity to no mean extent.

But what has surprised me most is the wonderful ease and flow with which the present work represents to us the most abstruse Philosophy of the great Advaitavadin Ṣamkara. Who could have ever thought that anyone would be able to serve the same under the guise of a Drama? But the supremely efficient, and infinitely courageous Dr. Roma has been able to perform this wonderful feat in a manner at once sublime and sweet.

She, as well-known, is herself a celebrated Vedanta scholar, with many works of a high calibre to her credit. But who would have thought her capable of producing such a superb dramatic work on Samkara's holy life and teachings, in such a beautiful, poetic, enchanting easily intelligible language? Further, the numerous verses in different metres as well as the songs add much to the great glory of this exhilarating work of great literary and other kinds of merits.

It is, indeed, a matter of great gratification to us all that Dr. Roma, following the holy footsteps of her husband Dr. Jatindra Bimal of immortal fame is composing so many modern Sanskrit Dramas on various cultural topics and staging the same all over India before highly appreciative audiences of thousands strong. Her highly scholarly research works have gained her great recognition in the scholarly world. But we think that her original contributions, like the present Drama, are what will enable her to get a permanent honourable place in the History of Modern Sanskrit Drama Movement in India very soon.

My blessings and good wishes to her for the same.

( Dr. ) Satkari Mookerji
Formerly, Head of the Dept. and
Asutosh Professor of Sanskrit. Calcutta University
and Director, Nalanda
Research Institute, Bihar.

October, 1971

# "शङ्कर-शङ्कर"नाटकस्य श्लोकसूची

( समाप्ता श्लोकसूची )

## "शङ्कर-शङ्कर"नाटकस्य छन्दःसूचीं

छन्दः श्लोकसंख्या—

अनुष्टुप्—२-३,१२,६१-६४,८१,८४,८६,६४-६५,१०४, १२३,

इन्द्रवज्रा—४७,७२,७६,८८,१०५,१०६-११०,

उपजातिः—२५,३६,४३,५५-५८,७३-७४,७७-८०, ६१,६६-१०१,११५ १२१-१२२,

उपेन्द्रवज्रा—८३

द्रुतविलम्बितम्—२२-२४,१११,

भुजङ्गप्रयातम्—३०-३२,४३-४४,४८,८५,११६,

मन्दाक्रान्ता—६०

मात्रा—१,६,८-६,१३-१६,२०,२६-२७, ३३-३६, ४०-४१,५०-५२,५४, ५६-६०,६५-६६,८७,६२-६३,१०७-१०८, ११२-११३,११७-१२०,१२५,

मालिनी—७,१०,१०२,

वंशस्थविलम्—४६,

वसन्ततिलकम्—४-५,३७-३८,८२,८६,११४,

शार्दूलविक्रीड़ितम्—१७-१८,४५,५३, ६८,१०३,१०६,१२४,

शालिनी—१०६,

शिखरिणी—११,२१,२६,४६,७०-७१,७५,६६,

स्रग्धरा—१६,२८,

(समाप्ता छन्दः-सूची)।

—०—

# शङ्कर-शङ्करम्

[ नाटकम् ]

( रमा-विरचितम् )

[ नान्दी ]

नमामि शङ्करं शङ्कर-किङ्करं
पङ्किल-संसृति-कलङ्कहन्तारम् ।
शङ्कित-मनःप्राण-सङ्कोचहरं
ब्रह्मवन्द्य-वाणी-झङ्कारधरम् ॥१॥

( नान्द्यन्ते प्रविशति सूत्रधारः )

सूत्रधारः । अहो ! महानन्द-घनो दिवसोऽयम् ! यतोऽद्य "प्राच्यवाणी" कर्तृपक्षैरादिष्टोऽस्मि "प्राच्यवाण्याः" द्वाविंश-प्रतिष्ठादिवससमुपलक्ष्य किञ्चन मनोमोहनं नवीनं संस्कृत-नाटकं विद्वज्जन-समक्षं सुष्ठु शोभनरूपेण अभिनेतव्यमिति ।

( सविषादं दीर्घं निःश्वस्य ) किन्तु किं करोमि मन्दभाग्यः ? कुत इदानीं नवीनं नाटकं लप्स्ये ? यतः, प्राच्यवाणीप्रतिष्ठाता विश्ववरेण्य आधुनिक-कविश्रेष्ठः अस्माकं प्राण-मनोजीवनस्वरूपः डक्टर-यतीन्द्रविमलः परमजननी-चरणारविन्द-मकरन्दं पातुं चिराय गतः ।

साधारण-जनग्राह्य-भावभाषासमुज्ज्वलम् ।
कालेनाल्पीयसाऽस्रष्ट नाटकं यो नवं नवम् ॥२॥

अपिच—

प्रणयादनुनीतो यो द्वित्रैरपि दिनैः कृती ।
नाटकं स्रष्टुमीशोऽभूत् शैलूषाणां सुखावहम् ॥३॥

ततः, इतः परं कुतो वयं नव-नाटकं प्राप्स्यामः ? भवतु, आह्वयामि मम प्रज्ञासमुज्ज्वलां नटीम् ।

देवि देवि ! यदि तव नाट्यकार्यं सर्वमवसितं, तत् त्वरितमत्रागम्यताम् ।

**नटी** । ( प्रविश्य ) देव ! इयमहमागतास्मि । किन्तु देव ! कथं भवान् विषण्ण-विरस-वदनः ? किं संघटितम् ?

**सूत्रधारः** । देवि ! सर्वं सुसज्जितं परिपूर्णञ्च सभागृहम् । किन्तु यतीन्द्रविमलविरहाद् रिक्ता वयं किं नव-नाटकमद्य अभिनेष्यामः ? अहो दौर्भाग्यम् ?

**नटी** । आर्य ! किमिति अनवसरे व्याकुलीभवसि ? किं भास्करालोको म्लानो भवति ? भागीरथीप्रवाहश्च शुष्कः कदाचन ? ततो यतिश्रेष्ठ-यतीन्द्र-विमलस्य पुण्य-जीवनसाधनापि न म्लाना शुष्का च भविष्यति कदापि । सा प्रस्फुटिता राजिष्यते निरन्तरं यतीन्द्रविमलजीवन-सर्वस्वाया यतीन्द्रविमलैक-जीवनाया डक्टर-रमाया रमणीय-जीवने ।

**सूत्रधारः** । सत्यं सत्यम् ! अहो ! पर्याकुलोऽहं तत् प्रमादाद् विस्मृत-वान् । अथ पृच्छामि, किं तत्रभवत्या रमया अन्यदपि नाटकं विरचितम् ?

**नटी** । ( विहस्य ) वाढ़म् । तया खलु डक्टर-रमया अद्वैत-वेदान्त-प्रचारक-श्रीशङ्कराचार्यस्य पूत-जीवनगाथामूलकं "शङ्कर-शङ्कर-"नामधेयं प्रसन्न-गम्भीरं नाटकं सद्य एव विरचितम् । तदेवाद्य वयं नाट्ये प्रयोक्ष्यामहे । सर्वं प्रस्तुतं, मा चिन्ताकुलो भवतु भवान् ।

**सूत्रधारः** । देवि ! साधु त्वया प्रस्तुतम् । अपूर्वा खलु आचार्य-देवस्य जीवनगाथा । पश्य पश्य, मनसा पश्य—

उद्यद्दिवाकरसमस्तरुणस्तपस्वी
मैत्र्येकतादिमधुरामसृतोत्स-वाणीम् ।
आ वारिधेस्तुहिन-मौलि-धराधरान्तम्
उद्घोषयंश्चलति पश्य विरामहीनः ॥४॥

उल्लङ्घ्य दुर्ग-दुरतिक्रम-शैलराजी-
रुत्तीर्य दुस्तर-गभीर-सरित्सहस्रम् ।
कान्तारकान् रविकरोत्कर-दुष्प्रवेशान्
आक्रम्य याति यतिराड् वत याति याति ॥५॥

चलति स चलति ; चलति—आपातदृष्ट्या धूलिधोरणीधूसरित-क्लेश-क्लेद-कवलित-मायामोहमथितस्य ब्रह्माण्डस्य शाश्वतब्रह्मस्वरूपत्वप्रकाशार्थम् ।

**नटी ।** अहो रोमाञ्चितं मम सर्वशरीरं तत्स्मरणमात्रेण ।

**सूत्रधारः ।** देवि ! शृणु—

भाति भूतले शङ्कर-दिनकरः
शिवावतारस्तापसप्रवरः ।
दिग्विजय-निरत-महामहीधर-
स्तपोलब्ध-धन-विश्वमनोहरः ॥६॥

अपि च—

निजचरित-विचित्रं रूपकं द्रष्टुमेतत्
स्वयमिह किमु रङ्गे शङ्करः सन्निधत्ते ?
मुदमुदधिगभीरामन्यथाहं भजे किं
शिवगुरुरिव शैवापत्यजन्माभिलाषी ॥७॥

( उभौ निष्क्रान्तौ )

**इति प्रस्तावना**

—०—

## शङ्कर-शङ्करम्

### प्रथम-दृश्यम्

( ततः प्रविशति ग्रामवृद्धेनानुगम्यमानः शिवगुरुः )

शिवगुरुः । ( श्रीशिववन्दना )

नमामि शङ्करं शङ्काहरं
समुज्ज्वल-भाल-कलित-शशधरम् ।
शमित-सुरधुनी-स्रोतःप्रसरं
सित-भस्माचित-श्मशानचरम् ॥८॥
शिरोमणि-शिवानी-शान्तिकरं
सर्प-सुशोभित-शवल-शरीरम् ।
शमन-गरलपायि-विश्वम्भरं
शम्वरारि-बलहारि-शिववरम् ।
प्रणमामि शङ्करं शुभङ्करं
शरण्यं सङ्कट-त्रातारम् ॥९॥

शोक-शंका-संकटवारणाय श्रीशिवाय नमः ।

अहो !

अमृतरसघनो मे वासरोऽयं विभाति
ज्वलति विमल-भासा स्निग्धया प्राणदीपः ।
दिवसमिव दिनेश-द्योत-विद्योतमानं
भवति च सहसा मे मानसं सुप्रसन्नम् ॥१०॥

अहो ! मम प्राणप्रदीपः प्रज्वलति सौवर्ण-सौन्दर्यैरकस्मात्, मम मनोवीणा झङ्करोति माङ्गल्य-माधुर्यैरकस्मात्, मम चित्तशतदलं प्रस्फुटति ऐश्वरिकै-श्वर्यैरकस्मात् । कथं कथम् ? आं ज्ञातम्—

मनोवीणा क्षीणाऽद्भुत-विरचना जीवनिवहे
स्वरैः सर्वैस्तन्त्रीरधिधरणि यस्या नियमिता ।

अभव्या वा भव्याऽलघुरथ लघुर्वापि घटना
भविष्यन्ती तस्यामनुरणति तस्मादनुदिनम् ॥११॥
तन्त्री मनसि मे चाद्य झङ्करोति सुखस्य यत् ।
तन्नूनं घटना काचिद् भविता कुशलप्रदा ॥१२॥

ग्रामवृद्धः । महोदय ! भवान् सर्वदा भगवत्कृपाधन्यो जनः । ततः श्रीभगवतः अनन्तसौन्दर्यम् असीम-माधुर्यम् अपरिसीमैश्वर्यञ्च भवतो जीवने प्रतिफलन्ति नितराम् ।

शिवगुरुः । भद्र ! इदं भवतः स्नेहमात्र-प्रचोदितं वाक्यम् । अहं दीनातिदीनः शिवसेवकः, शुभङ्कर-शङ्करस्य कृपाकणाप्रार्थी च । सच्चिदानन्द-रूपस्य सर्वलोक-धारक-पालक-चालकस्य सर्वव्यापिनस्तस्य मधुर-मोहनः प्रतिविम्बो मम मलिन-हृदयदर्पणे कथं प्रतिफलिष्यति ?

तथापि देवादिदेवो महादेवः पतितपावनो हीनजनतारणो दीनमनःशरणः क्षीणप्राणभरणः करुणावरुणालयश्च । तत एव मादृक् शिवगुरुनामधन्यः अधमाधमः कीटानुकीटोऽपि तस्य आलोककणाम् आनन्दविन्दुम् अमृतलवञ्च लब्ध्वा धन्यातिधन्यो जातः । शोक-शङ्का-सङ्कट-वारणाय श्रीशिवाय नमः ।

( श्रीशिवस्तुतिः )

शिव शिव शम्भो ! जीवनमम्भो गलति हृदम्भोनिधितो धीरम् ।
हर हर शंकर दुष्टभयंकर पालय किंकरमक्षमहीरम् ॥१३॥
तव चरणान्ते मङ्गलवृन्ते दीननिशान्ते याचेऽधीरम् ।
कुरु मां पुरहर तवाङ्घ्रि-तरुचरमुच्चनामपरमपूर्व-कीरम् ॥१४॥
तप्तपात्रगत-तोयविन्दुमितमत्र हि धन-सुत-दार-शरीरम् ।
वेद्मि दिगम्बर ! सर्वं शम्बर-विरचितमम्बर-सुम-हिण्डीरम् ॥१५॥
तव चरणद्वयमशोकमपभयमेनं दर्शय संश्रिततीरम् ।
यावदहीश्वर-रचित-स्रग्धर ! नैष परिहरत्यन्त-समीरम् ॥१६॥

( ततः प्रविशन्ति विशिष्टायाः पिता सर्वज्ञः, माता कामाक्षी, भगिनी ग्रामयुवकश्च । )

**कामाक्षी।** (आनन्दोत्फुल्ला) वत्स शिवगुरो! शृणु, आनन्दवार्तां शृणु! ममादरिणी कन्या विशिष्ट-रूपगुणसम्पन्ना विशिष्टा, सतीशिरोमणिः सती कियत् कालात् पूर्वमेव—प्रखरप्रभया आकाशस्य केन्द्रस्थलं समुद्भासयति भगवति भास्करे अत्याश्चर्यं पुत्रमेकं प्रसूतवती।

**सर्वज्ञः।** अहो! परम-सौभाग्यचिह्नितः समयोऽयम् पूर्णमध्याह्नः प्रचण्ड-मार्तण्डस्य पूर्णोर्ध्वोत्थानसमयः, अनिन्द्यानन्दनन्दितसमयः, विपुल-वीर्य-विधृत-समयः।

**पूर्णोर्ध्वोद्गमकाल एष सवितुर्देवस्य कालात्मनः**
**सौभाग्योदयसूचकं शुचि-शुभं मध्यन्दिनं वर्तते।**
**कालेऽस्मिन् विमले सतां बहुमते वीर्यान्विते चावयो-**
**र्दौहित्रः प्रथमोऽजनिष्ट तदिदं जायेत भद्रोत्तरम्॥१७॥**

अहो आनन्दस्य परा काष्ठा!

**शिवगुरुः।** (भावाविष्टः) श्रद्धेय श्वशुरमहोदय! श्रद्धेये श्वश्रूमातः! किं कथयतो भवन्तौ? पुत्रो मम जातः?

**कामाक्षी।** अथकिम्? पुत्रस्तव जातः, अत्याश्चर्यः अतुलनीयः अनिर्वच-नीयश्च पुत्रस्तव जातः।

**ग्रामयुवकः।** (सोपहासम्) "अत्याश्चर्यः अतुलनीयः अनिर्वचनीयश्च पुत्रस्तव जातः"? कथम् अत्याश्चर्यः, कथम् अतुलनीयः, कथम् अनिर्वचनीयश्च? वस्तुतस्तु सर्वं एव स्वपुत्रान् अत्याश्चर्यान् अतुलनीयान् अनिर्वचनीयांश्च कथयन्ति। हाः हाः हाः (हसति)

**विशिष्टा-भगिनी।** (सरोषम्) विरमतु विरमतु भवान्। नायम् उपहासविषयः, सत्यमिदम् अक्षरशः सत्यम्।

**ग्रामयुवकः।** "अक्षरशः सत्यम्"? हाः हाः हाः! कथयतु भवती कथयतु तत् कृपया।

**विशिष्टा-भगिनी।** शृणोतु भवान्, शृणोतु कृपया। पुत्रस्य जन्ममात्रं सूतिकागृहं जातं दिव्यालोकोद्भासितं स्वर्गीय-सौरभवासितं मोहन-रणन-निनादितञ्च।

**ग्रामयुवकः ।** तत् किं कश्चिद् देव एव युष्माकं गृहे अवतीर्ण इति भवती वक्तुमिच्छति ? अविश्वास्यं सर्वमेतत् । हाः हाः हाः ( हसति ) ।

**विशिष्टा-भगिनी ।** कथम् अविश्वास्यम् ?

पङ्के पूतिमये स्फुटन्ति कमलान्यङ्गार-कृष्णाकरे
हीराणीह विभान्ति, शुक्तिपुटके मुक्ता लभन्ते द्युतिम् ।
राजन्ते सिकतासु काञ्चनकणास्तुच्छातितुच्छास्वपि
जायन्तामिह किं न धूलि-मलिने देवाश्च भूमीतले ॥१८॥

**सर्वज्ञः ।** अलमुपहासेन । यदि भवान् तस्य तद् रूपमालोकयिष्यत् तदा निश्चितं नैवमुपाहसिष्यत् । आश्चर्यतमं रूपं पुत्रस्य ।—हिमशुभ्रवदनः इन्दीवरनयनः सरसिजसुन्दर-मनसिजजयी पुत्रकोऽस्माकं न साधारण-जनसमः । नहि नहि, न जानाति भवान् यत् तस्य कमलकोमल-शरीरान्निःसरति निरन्तरं काचन दिव्यद्युतिः ।

**ग्रामयुवकः ।** न विश्वसिमि । नैतत् सम्भवति, कदापि न ।

**शिवगुरुः ।** सम्भवति, निश्चितं सम्भवति । न जानाति किल भवान् मम श्रीभगवद्दर्शन-वृत्तान्तम् अत एवं ब्रवीति ।

**ग्रामयुवकः ।** भवान् गुरुजनो वयोवृद्धश्च । तथापि सर्वेषां मङ्गलार्थम् अहमित्थं भणामि—क्षुद्र-जनानां श्रीभगवद्दर्शनमसम्भवम् ।

**ग्रामवृद्धः ।** ( सरोषम् ) अरे रे चपल ! वाचाल ! अर्वाचीन ! अलीक-पाण्डित्याभिमानम् अकारण-प्रगल्भताम् असहनीय-दाम्भिकताञ्च त्यज । साधन-वलेन स्वयं भगवान् अपि धराधाम्नि आविर्भवतीति पण्डितानां स्थिर-मतम् ।

**ग्रामयुवकः ।** स्वकपोल-कल्पितं सर्वमेतत् शशविषाणवद् अलीकम् ।

**कामाक्षी ।** वत्स ! शान्तो भव । वयोवृद्धानां सम्माननं सर्वेषाम् अवश्यकरणीयम् । वत्स शिवगुरो ! कथय अस्मान् तव भगवद्दर्शन-वृत्तान्तम् । वयम् उत्कण्ठिता वर्तामहे ।

**शिवगुरुः ।** ( भावाविष्टः ) शृण्वन्तु सर्वे कृपया तद् अत्याश्चर्य-विवरणम् ।

[ भगवद्दर्शन-दृश्यम् ]

( ततः प्रविशति शिवगुरुस्तस्य सहधर्मिणी विशिष्टा च )

**विशिष्टा।** ( क्रन्दनातुरा ) अधन्यं मम जन्म, शून्यं मम गृहम्, खिन्नं मम स्वजनवृन्दम्। सन्तानहीनाया मम शीर्णाः प्राणाः, दीर्णं मनः, जीर्णं जीवनम्! अहो! किं करोमि मन्दभाग्या?

**वृक्षो वन्ध्योऽपि कामं दल-कुसुम-रुचा प्रीणयेदेव पान्थान्**
**कान्त्या स्निग्धैश्च घोषैर्मुदमथ वितरेद् वर्षदीनो घनोऽपि।**
**नारी वन्ध्या तु तैस्तैर्बहु-विमल-गुणैर्भूषितापि प्रभोर्वा**
**बन्धूनां वा प्रसादं न जनयितुमलं निष्फले जीवनेऽस्याः॥१६॥**

( शिरसि कराघातं कृत्वा रोदिति )

**शिवगुरुः।** प्रिये प्राणप्रतिमे! न पर्याकुला भव। 'कालाडि'नामधेयकं स्वग्रामं त्यक्त्वा आवां वृषपर्वतस्थितं शिवमन्दिरमिदम् आगतौ। ततो वरदान-दक्षो मम स्नेहघनो मङ्गलदायको भगवान् शिवः निश्चितमेव आवयोर्मनोवाञ्छां पूरयिष्यति। धैर्यमवलम्बस्व कल्याणि! मा शोकाकुला भूः।

**विशिष्टा।** भवान् जानाति किल यत् आवां कठोर-कृच्छ्रसाधनपरौ अत्र विद्यावहे बहुकालम्। प्रारम्भे आवां कन्द-मूलमात्रम् आहाररूपेण स्वीकृत्य अन्ते तदपि विसृष्टवन्तौ। इदानीं पुनः श्रीभगवतः शिवस्य पवित्र-तमं श्रीचरणामृत-कणमात्रं प्रत्यहं पीत्वा मासाधिक-कालम् अत्रैव स्थितौ, निरन्तरं पूजा-जपादिरतौ च। तथापि देवादिदेवः करुणा-वारिबिन्दुमपि न वर्षति दीन-हीनयोरावयोः? अहो दौर्भाग्यम्!

[ दूरे दुन्दुभिनादः पुष्पवृष्टिश्च ]

**शिवगुरुः।** प्रिये! पश्य पश्य! अकस्माच्चतुर्दिशं विमल-विभया समुज्ज्वलयन् क एष आविर्भूतः? अहो रोमाञ्चित-कलेवरोऽहं जातः।

**विशिष्टा।** ( सानन्दम् ) नाथ! नाथ! पश्य, स्वयं देवादिदेवो महादेवोऽभ्यागतः। आवयोः प्रार्थनया विगलित-हृदयो भक्तवत्सलः संसार-सागर-तरण-तरणीस्वरूपः स्वयं शङ्करोऽत्र आविर्भूतः।

( दम्पती साष्टाङ्गं प्रणमतः )

**शिवगुरुः ।**　　( श्रीशिव-वन्दना )

हर हर महेश्वर ! हर वञ्चित-धरित्रीभारं
हरे ! हरे ! त्रिपुरारे ! धर शङ्कित-संसारम् ।
शिव शिव चिरञ्जीव ! पिव भवगरलं निरन्तरं
शङ्कर ! शङ्कर ! शुभङ्कर ! सञ्चर हृत्कन्दरम् ॥२०॥

**उभौ ।** देवादिदेव ! परमदेव ! आशीर्वादभिक्षू आवाम् ।

**महादेवः ।** ( सस्मितम् ) वत्सौ ! युवयोर्मिलित-साधनया अहं साति-शय-प्रीतः । ततो वरान् प्रार्थयेथाम् ।

**विशिष्टा ।** ( सावेगम् ) मम भुवनभास्कर ! मम संसारशरण ! मम जीवन-ज्योतिः, न मम काचिदपि प्रार्थनाऽस्ति, न मम काचिदपि कामना विद्यते, न मम काचिदपि साधना विराजते ।

तव भास्कर-भास्वर-रूपदर्शनादेव मम सर्वाः प्रार्थनाः क्षान्ताः, तव शिशिर-शीतल-वाक्यश्रवणादेव मम सर्वाः कामना दान्ताः, तव कमल-कोमल-पादस्पर्शनादेव मम सर्वाः साधनाः शान्ताः ।

**महादेवः ।** वत्से ! अपि सत्यमेतत् ? परम-सन्तुष्टोऽहं तवानेन निष्काम-व्यवहारेण । वत्सौ ! ततोऽहं गच्छामि । आशीर्वादान् गृह्णीतम् ।

**शिवगुरुः ।** ( स्वगतं सोद्वेगश्च ) अहो ! किं कृतवती इयं भावोन्मत्ता नारी !

तपस्यन्ती तीव्रं तनुजवरमेकं पुरहरं
मुहूर्तात् पूर्वं या करुण-करुणं याचितवती ।
समायाते तस्मिन् वरवितरणायाक्षिविषयम्
अहो मोहान्धैषा प्रकृतविपरीतं वदति किम् ॥२१॥

ततोऽहमेव कथयामि—( उच्चैः ) देवदेव ! किन्तु अस्ति ममैका हृदयोत्था प्रार्थना ।

**महादेवः ।** कथय, वत्स ! निर्भयं कथय । किं वाञ्छसि त्वम् ?

**शिवगुरुः।** अहं निःसन्तानः। भगवन्! कृपया पुत्रमेकं मह्यं देहि।

**विशिष्टा।** ( पूर्ववद् भावाविष्टा ) नहि, नहि, न किञ्चिदपि आवयोः काम्यमस्ति। केवलं वलं देहि, यथा दीनातिदीनाहम् आजीवनं प्रत्यहं तव दर्शन-स्पर्शनलाभेन धन्यातिधन्या भवेयम् इति।

**शिवगुरुः।** तथापि एका मे प्रार्थना, कृपया तां पूरय भगवन्!

**महादेवः।** तथास्तु। भवान् भक्तश्रेष्ठः, ततोऽहं सानन्दं तव मनोवासनां पूरयिष्यामि।

**शिवगुरुः।** दीर्घायुषं सर्वज्ञञ्च पुत्रं मे देहि कृपया वाञ्छाकल्पतरो! भगवन्! पुत्रस्य दीर्घायुष्ट्वं कामये वंशस्य स्थायित्व-रक्षणार्थम्, तस्य सर्वज्ञत्वञ्च कामये वंशस्य गुरुत्वविधानार्थम्।

**महादेवः।** दीर्घायुषं सर्वज्ञञ्च पुत्रं कामयसे? नहि नहि, न तत् सम्भवपरमस्ति। यतः दीर्घायुष्ट्वं देहाश्रयि सर्वज्ञत्वञ्च आत्माश्रयि; ततस्तयोः सहावस्थितिर्न सम्भवति। अत एतयोरेकतरं प्रार्थयस्व वत्स!

**शिवगुरुः।** किं करोमि; किं वा कर्तव्यम्? एकतः अल्पायुः पुत्रो माता-पित्रोर्जीवनस्य ज्वलच्छल्यतुल्यः। अन्यतो मूर्खः पुत्रोऽपि मृतश्च पुत्रसमः। ततः किमहं प्रार्थयिष्ये?

तनुगता ननु या चिरजीविता
यदियमात्मगता सकलज्ञता।
गुरुतमा कतमाऽस्तु मताऽनयो-
रिति न निश्चयमेति मनो मम ॥२२॥

अहो! कथं द्वयमेव न लभ्यते?
किमु सुखद्वयमाशुमनीश्वरो-
युगपदेष नरो भवति प्रभो!
घटयतः कथमेकमथेतरत्
सपदि तस्य कराद् गलति द्रुतम् ॥२३॥

तथाहि— प्रियतमां दयितामपरित्यजन्
न जन-रञ्जनकृद् रघुसत्तमः ।
यदुपतिश्च गतो मथुरेशतां
परिहरन् वृषभानुसुतां प्रियाम् ॥१९॥

**विशिष्टा ।** नाथ ! एतद्विषये को वा सन्देहः, का वा द्विधा, किं वा भयम् ? देहादात्मा सहस्र-कोटिशो महत्तरः, सहस्र-कोटिशः सुन्दरतरः सहस्र-कोटिशो वरणीयतरश्च । नाथ ! ततः सर्वज्ञं पुत्रमेव प्रार्थयस्व ।

**शिवगुरुः ।** सत्यं सत्यम् ! परज्ञानप्रदीप्ते ! प्रगाढ़ा तव प्रज्ञा, महनीया तव मेधा, अतुलनीया तवानुभूतिः ।

परम-देव ! आवाभ्यां सर्वज्ञं पुत्रं देहि । दासानुदासौ आवां तव ।

**महादेवः ।** तथास्तु । युवयोर्मनोवाञ्छा अचिरेणैव परिपूर्णा भविष्यति । भक्तवरौ ! शृणुतम् । अहमेव स्वयमागमिष्यामि युष्मद्गृहे युवयोः पुत्ररूपेण । कुतः ?

भक्तीष्टकं निर्मल-शान्ति-कुड्यं
दृढानुरागोर्जित-वज्रलेपम् ।
अभेद्य-मैत्रीच्छदिराधिहारि
ममाश्रयो भक्तगृहं पवित्रम् ॥२०॥

**विशिष्टा ।** ( सावेगम् ) देवदेव ! भवान् स्वयमेव अस्माकं दीन-हीन-कुटिरे आगमिष्यति ? अहो भाग्यम् ।

**शिवगुरुः ।** अहो ! अचिन्तितपूर्वम् आशातीतञ्च एतत् सर्वम् । परमदेव ! वागूरहितो रोमाञ्चित-कलेवरश्चाहं जातः । असीमा खलु भवतः कृपा !

**महादेवः ।** ( विलीयमानः, दूरात् ) प्राणप्रतिम-भक्तवरौ ! न पर्याकुलौ भवतम् । सर्वथा मङ्गलमेव भविष्यति निश्चितम् ।

**शिवगुरुर्विशिष्टा च ।** श्रीभगवन्तं भूयो भूयः साष्टाङ्गं प्रणमामि ।

( समाप्तं श्रीभगवद्दर्शन-दृश्यम् )

**सर्वे ।** आश्चर्यम् ! आश्चर्यम् ! आश्चर्यम् !

**कामाक्षी।** महेश्वरस्य वाक्यं नासत्यं भविष्यति, कदाचन न। ततः स्वयं शङ्कर एवास्मद्गृहे आविर्भूतः इति न कोऽपि सन्देहः। वत्स ! अत एव नव-जातपुत्रस्य शङ्कर इति मधुरतमं नाम कुरु।

**शिवगुरुः।** यद् भवती आज्ञापयति। योग्यतमञ्चेदं नाम।

**ग्रामयुवकः।** आर्य ! क्षमां याचे। यन्मयोक्तं तत् सर्वम् अज्ञान-प्रसूतम्।

**शिवगुरुः।** वत्स ! भगवानेव शान्तिदायकः, भगवानेव क्षमाकारकः, भगवानेव मङ्गलधारकः। ततः श्रीभगवतः कृपामेव याचस्व।

**सर्वे।** जयः शुभङ्कर-शङ्करस्य जयः, जयः शङ्कर-शङ्करस्य जयः, जयः शङ्करकिङ्कराणां जयः।

[ इति प्रथम-दृश्यम् ]

—०—

## द्वितीय-दृश्यम्

[ शङ्करस्य सन्न्यासग्रहणम् ]

**स्थानम्**—"कालाडि" ग्रामस्थम् "आल्वोयाइ" नदीतीरम्।

**समयः**—प्रभातम्।

( प्रविशति अष्टवर्षीयः परिहितकृष्णाजिनः मुञ्जमेखलाधारी यज्ञोपवीतशोभी प्रफुल्लवदनः शङ्करः )

**शङ्करः।** ( परितो विलोक्य ) अहो ! रमणीयं खल्विदं स्थानम्। अपूर्वोऽयं कालाडिग्रामः। पश्य—

**शस्य-सस्मित-कोमलकाननो**
**रौद्रदीपित-रमणीयाननः।**
**आम्रकदली-कलित-कान्तारः**
**शस्य-शोभित-सुन्दर-प्रान्तरः ॥२५॥**

पुञ्जित-मधुकर-नन्दित-शिञ्जो
मञ्जुल-मञ्जरि-रञ्जित-कुञ्जः ।
चञ्चल-तरङ्ग-चुम्बित-चरणो
ग्रामो राजति सज्जन-तरणः ॥२६॥

अहो ! विश्वप्रकृत्या ईदृश-रूपराशिः किं स्फुटीकरोति ? स स्फुटीकरोत्येतदेव यत् विश्वप्रकृतिर्विश्वपतिरूपराशेः प्रतिविम्ब एव। ततः कथं सा मिथ्या भवेत् ? नहि नहि, ब्रह्माण्डं ब्रह्मस्वरूपम् अत एव न ब्रह्मभिन्नम्। अपि सत्यमेतत् ?

[ ततो वेगेन प्रविशति केरलाधीशो राजशेखरः ]

**राजशेखरः।** देव ! प्रणमामि भवन्तम्।

**शङ्करः।** को भवान् ? अहमपि भवन्तं प्रणमामि।

**राजशेखरः।** अहं भवतो दीनातिदीनो दासः, केरलाधिपती राजशेखरः।

**शङ्करः।** किन्तु कथं भवान् ईदृश-साधारणस्थाने आगतः अकस्मात् ?

**राजशेखरः।** भवतो गृहं गत्वा तत्र भवन्तं न दृष्ट्वा अहं भवद्दर्शन-लाभाय अत्रागतो धावनपरः।

**शङ्करः।** कृतार्थोऽस्मि, किन्तु कथम् ?

**राजशेखरः।** आर्य ! आपात-दृष्ट्या भवान् अष्टवर्षीयो बालक एव। किन्तु वस्तुतो भवान् प्राज्ञश्रेष्ठः भक्तकुल-शिरोमणिः सन्न्यासिप्रवरः। भवतः पुण्य-पादस्पर्शनेन मे राजप्रासादः सुधन्यो भविष्यति सुनिश्चितम्। ततोऽहमेकं हस्तिनं भवदानयनाय अन्यञ्च उपढौकनरूपेण प्रेषितवान्। कथं भवता तत् श्रद्धार्घ्यं न गृहीतं कृपया ?

**शङ्करः।** राजाधिराज ! धन्योऽस्मि भवतः स्नेहसुधास्वादनेन। किन्तु भवान् जानाति किल यत् अहम् आजन्मब्रह्मचारी। ब्रह्मचारिणो जनाः किं करिष्यन्ति हस्तिना ? ते भिक्षोपजीविनो मृगचर्मवल्कलधारिणोऽध्ययनाध्यापनव्रताः सन्ध्यावन्दनरताः गुरुसेवा-नियताश्च। हस्तिप्रमुख-पार्थिव-द्रव्याणि तेषां कां वा सेवां कर्तुं पारयन्ति ?

राजन् ! स्वधर्मनिष्ठान् साधनैकपरान् ब्रह्मज्ञान् ब्राह्मणान् न भवानपि प्रलोभयितुं शक्तः। भद्र ! पार्थिव-वस्तुदानेन संसार-विमुखान् साधु-सन्न्यासिनो धर्मजीवनात् स्खलयितुं न यत्नपरो भवतु भवान्। परन्तु स्वधर्म-पालनविषये भवान् सर्वान् उद्बुद्धान् करिष्यति—इत्यस्माकं महती आशा, भवतोऽपि महत् कर्तव्यम्।

**राजशेखरः।** सुष्ठूक्तं भवता। अहमनुतप्तः। किन्तु ब्रह्मचारिणोऽपि अर्थेन प्रयोजनमस्ति भरण-पोषणाय। अत एव कृपया भवान् इमाः स्वर्णमुद्रा गृह्णातु। इमा मया अत्र आनीता भवतः सेवार्थम्।

( स्वर्णमुद्राः शङ्करस्य पदतले नियच्छति )

**शङ्करः।** अपारा खलु भवतः करुणा ! किन्तु केवलम् ऐश्वरधनलोभी अहम्, मम पार्थिव-धनेन किम् ? योग्यतर-पात्राय तत् समर्पयतु भवान् सानुग्रहम्।

**राजशेखरः।** देव ! भवतः प्रज्ञाप्रदीप्तोपदेशेन मम चित्तस्य तमिस्रं चिराय विदूरितम्। किन्तु भवतः श्रीपाद-पद्मे निवेदिता मुद्रा न मया पुनः स्पर्शनीया। ततो भवानेव तत् करोतु कृपया।

**शङ्करः।** न, न, न तत् सम्भवति।

**राजशेखरः।** भवतु देव ! भवत्पाण्डित्यमुग्धः कृपाप्रार्थी अहम्। मह्यं ज्ञान-धनं किञ्चिद् ददातु भवान् कृपया।

**शङ्करः।** श्रीभगवान् एव दाता, श्रीभगवान् एव पाता, श्रीभगवान् एव धाता। श्रीभगवन्तं पूजयतु भवान् सर्वदा शुद्धचित्तेन।

**राजशेखरः।** दिव्य-दृष्टिर्मे विस्फुरिता। भगवन् ! अधुना यामि। नमो भगवते। (प्रस्थितः)

( ततो वेगेन प्रविशति विशिष्टा )

**विशिष्टा।** (सोद्वेगम्) नयनमणे ! पुत्रक ! किं त्वमत्र करोषि ? गृहे त्वां दीर्घकालम् अदृष्ट्वा अहमत्रागता व्याकुलीभूता।

**शंकरः।** मातः ! प्रणमामि। अहमत्र स्नानार्थमागतः। किन्तु कथं त्वं व्याकुला जाता ? किं संघटितम् ?

**विशिष्टा।** दैवज्ञ-ब्राह्मणानां गणनानुसारेण त्वं स्वल्पायुः। अष्टमे षोड़शे द्वात्रिंशे च वर्षे तव मृत्युयोग आस्ते। अधुना त्वम् अष्ट-वर्षीयः। ततः किं करोमि ?

**शंकरः।** मा भैषीः। मातः! सन्न्यासिजना एव मृत्युभयातीता अमृताश्च। ततः सन्न्यास-ग्रहणाय पुनरपि तवानुमतिं प्रार्थये स्नेहमयि जननि!

**विशिष्टा।** नहि, नहि, कदापि न, कदापि न। त्वं दुग्धपोष्यः शिशुः। सन्न्यास-व्रतस्य कठिनातिकठिनानि साधनानि न त्वया परि-पालनीयानि। नहि नहि, मम प्राणधन-पुत्राय अहं सन्न्यास-ग्रहणार्थम् अनुमतिं दातुं न शक्नोमि कदाचन।

**शंकरः।** स्नेहमयि! मातः! गौरवमयि मातः! धैर्यं धारय। अहं संसारधर्मपालने वीतस्पृहः। अहं कामये केवलं विद्यार्जनम्, केवलं विद्या-वितरणम्, केवलं सन्न्यासग्रहणम्। ततः सन्न्यास-व्रतावलम्बनाय तवानुमतिं कामये मातः ?

**विशिष्टा।** नहि नहि, न तत् कदापि सम्भवति। अहं पतिहीना सहाय-सम्बलशून्या दुःखदग्धा नारी। त्वया विना किं वास्ति मम जीवने ? त्वं सन्न्यासं गृह्णासि चेत् किंवा भविष्यति ममाधन्यशून्य-जीवनेन ?

( रोदिति )

**शङ्करः।** मातः! मातः! विरम, विरम। तव एकापि अश्रुकणा मम हृदये प्रचण्ड-दावज्वालां जनयति। मातः! अहमधुना स्नानार्थं यामि अदूरस्थ "आलोयाइ" नदीजले। क्षणं तिष्ठात्रैव।

**विशिष्टा।** अहो! रजतगिरिनिभः समुज्ज्वलकान्तिः पुत्रको मे। मुहूर्तमपि तं नयन-वहिर्भूतं कर्तुं न पारयामि। तस्मिन् गते मम जीवनमपि विगतं भविष्यति सुनिश्चितम्।

( अदूरे आर्तरवः )

**शङ्करः।** त्रायस्व मां त्रायस्व। नदीजले स्नानरतोऽहं सहसा कृतान्त-सदृशेन कुम्भीरेणाक्रान्तः। ( वेगेन प्रविशन्ति ग्रामबान्धवाः )।

**प्रथमः।** किं, किं संघटितम् ?

**द्वितीयः।** आर्तरवः कस्य ?

**विशिष्टा।** वत्साः! मम प्राणप्रतिमः पुत्रः शङ्करः नदीजले कुम्भीर-कवलितः। तदहं यामि तस्य जीवनरक्षार्थम्। ६

**तृतीयः।** वयं गच्छामस्तस्य साहाय्यार्थम्। मातः! धैर्यं धारय।

**प्रथमः।** जननि! तिष्ठतु भवती अत्र। वयमेव गच्छामस्तव पुत्रस्योद्धारार्थम्। मा पर्याकुला भवतु भवती। (प्रस्थिताः)

**विशिष्टा।** किं करोमि मन्दभाग्या ?

**शङ्करः।** (दूरात्) मातः! मातः! अयं कृतान्तसमः कुम्भीरो निर्दयं माम् आकृष्य गभीर-जलं नयति। मम अन्तिम-कालः समुपस्थितः। किन्तु मम मुक्तिः सुदूर-पराहता, यतः अद्यापि मम सन्न्यास-व्रतग्रहणं न त्वयाऽनुमोदितम्। स्नेह-सुशीतले जननि! अत्यल्प-समयोऽवशिष्टः अधुनापि। अत एव मरणात् प्राग् यदि मया सन्न्यास-धर्मो गृह्येत तदा मम मोक्षाशा फलवती स्यात् कथञ्चित्। जननि! सन्न्यास-ग्रहणाय मह्यमनुमतिं देहि कृपया।

**विशिष्टा।** तथास्तु। वत्स! अहं तव सन्न्यासग्रहणमनुमन्ये। त्वं प्रव्रज्याग्रहणं कुरु सानन्दम्। वत्स! कल्याणं ते भूयात्। सुखी भव। (रोदिति)

(ततः प्रविशति रक्ताक्तपदः सबान्धवः शङ्करः)

**शंकरः।** मातः! प्रणमामि।

**विशिष्टा।** हा हतास्मि! मम मनोजजयिनः पुत्रकस्य का दशा समुपस्थिता। अहो कष्टम्!

**चिकित्सकः।** मातः! मा भवती उद्विग्ना भवतु। क्षतानि न प्राणघातीनि। अहं भेषजं ददामि (तथा करोति)।

(चिकित्सको ग्रामबान्धवाश्च निष्क्रान्ताः।

**शंकरः।** परमादरिणि! मम जननि! स्नेहप्रतिमे मम जननि! तव तुलना त्वं हि केवलम्। त्वं हि मम मुक्तिदात्री, साधनधात्री जीवनकर्त्री।

जननि ! तवानुमतिक्रमेण अधुनैवाहं सन्न्यास-धर्ममवलम्ब्य अद्यैव गृहं त्यक्ष्यामि ।

विशिष्टा । ( विलपन्ती ) न न, चन्द्रवदन पुत्रक ! तव श्रीमुखपङ्कज-दर्शनेन विना अहं मुहूर्तमपि जीवनं न धारयिष्यामि । ततो न गच्छ पुत्र ! न गच्छ । दीनां दुःखिनीमिमां त्यक्त्वा न गच्छ । को वाऽन्यस्त्वया परित्यक्तां मां रक्षिष्यति ? मम मरणे जाते त्वं स्वच्छन्दं सन्न्यास-व्रतं ग्रहीष्यसि नाम ।

शंकरः । जननि ! मा शोचीः । को मां कुम्भीर-कवलाद् रक्षितवान् ? स्वयं श्रीभगवान् एव । स त्वामपि रक्षिष्यति सुनिश्चितम् । नोद्विग्ना भव परम-स्नेहमयि जननि !

विशिष्टा । प्राणस्पन्दनरूप पुत्रक ! न मां त्यज, न मां त्यज ! त्वद्विरहेण अहमपि विलीयमाना भविष्यामि सुनिश्चितमेव । वत्स ! न जानासि किल त्वं, यत्—

पुत्रः पुष्पं जनन्या नियत-विकशितं जीवनोद्यानभूमौ
सम्पूर्णश्चन्द्रविम्बो हृदि निभृत-नभोमण्डले निष्कलङ्कः ।
सर्वर्तु-ध्वान-धन्यः परभृदनुपमो मञ्जुले प्राणकुञ्जे
यद्वा स्थानान्तरस्थो धृत-तनय-तनुः सोऽयमात्मैव तस्याः ॥२८॥

शंकरः । मातः ! परम-करुणाकोमले ममतामधुरे मातः ! त्वदर्थं सर्व-व्यवस्थादिकं मया सम्यक् कृतम् ।

मातः ! अहं तव पुण्य-पादस्पर्शनेन प्रतिजाने—यत्, स्मरणमात्रेण अहं मुहूर्तेन त्वत्सकाशे आगमिष्यामि । पुनश्च, तवान्तिम-कालेऽपि तव श्रीमुख-दर्शनाय, श्रीवाणीश्रवणाय श्रीपादपद्मस्पर्शनाय च आगमिष्यामि पृथिव्याः सुदूरतम-प्रान्तादपि, इयं मम सुदृढा प्रतिज्ञा ।

विशिष्टा । धिक् मां स्वार्थसर्वस्वाम् ! धरणीभारहरः पुत्रो मम न केवलं ममैव जीवनधनम् किन्तु समग्र-जगतः । विश्वब्रह्माण्डं तदर्थम् अपेक्षते साग्रहम् । अतः का वाऽहं वाधां जनयितुम् ?

वत्स गच्छ, सानन्दं विश्वविजयार्थं गच्छ। गच्छ विश्वोद्धारार्थम्, गच्छ सनातन-धर्म-संस्थापनार्थम्। प्राणप्रिय! सफल-मनोरथो भव! कल्याणं ते भूयात्।

**शंकरः।** अतुलनीयः खलु मातृस्नेहः। मातः! अहं तव अधमाधम-सन्तानः केवलं दुःखदान-दक्षः। मातः! क्षमस्व माम्। आजीवनम् अहं तव दुःखकारणम्। तथापि करुणाप्रतिमूर्तिस्त्वं सर्वदा मां परम-ममता-सहकारेण परिपालितवती यत्नेन। का तव तुलना?

(वेगेन प्रविशति विशिष्टाभगिनी)

**भगिनी।** (शङ्करमालिङ्ग्य) जीवन-धन मम! परम-जननी त्वां रक्षितवती अशेष-कृपया। कुम्भीराक्रमणवार्तां श्रुत्वा तत्क्षणादेवाहं उन्मत्तेवात्रागता। एहि एहि हृदयरस! गृहं झटिति प्रत्यावृत्य विश्रामं लभस्व।

**शङ्करः।** परम-ममतामयि मातृष्वसः! प्रणमामि त्वाम्। किन्तु नाहं गृहं प्रत्यावर्तिष्ये। यतः आगामिदिवसे अहं सन्न्यास-व्रतमवलम्बिष्ये ध्रुवम्। सन्न्यासिजनस्य गृहपरिवारो नास्ति।

**भगिनी।** किं किम्? अपि त्वं सन्न्यास-व्रतमवलम्बिष्यसे? हा हतास्मि। किन्तु अस्मच्छास्त्रानुसारेण मातुरनुमतिं विना सन्न्यासो न ग्रहणीयः।

**शङ्करः।** परम-स्नेहमयी जननी मे तादृशानुमतिं दत्तवती।

**भगिनी।** (सोद्वेगम्) असम्भवम् असम्भवम्! न विश्वसिमि। सा स्वयं माता ततोऽपि पतिहीना, बान्धववर्जिता, सहाय-सम्बलहीना रिक्ता च। माता न कदापि पुत्रम् इत्थं परित्यक्तुं समर्था।

**विशिष्टा।** मम परम-स्नेह-शीतले भगिनि! नोद्विग्ना भव। मयैव पुत्रस्य सन्न्यास-ग्रहणमनुमोदितम्।

**भगिनी।** (सरोषम्) किं किम्? त्वयैव? अरे निष्ठुर-हृदये! किं कृतम्? अष्टमवर्षीयोऽयं बालकः अतितरुणः, अतिसुकुमारः अतिपरनिर्भर-

शीलश्च। तथापि माता त्वम् अहङ्कारोन्मत्ता यशोलोभेन स्वसन्तानमपि देवताया यूपकाष्ठे वलिं कर्तुं न द्विधाग्रस्ता भवसि? धिक् त्वाम्। अद्य प्रभृति त्वं समग्र-परिवारस्य समग्र-समाजस्य समग्र-देशस्य च त्याज्या।

कुम्भीराक्रमणेन तस्याष्टम-वर्षगत-मरण-योगः खण्डितः। तदनन्तरं स्वगृहे विशेषयत्नेन तस्य लालन-पालनमेव तवैकमात्रं कर्तव्यम्। तथापि त्वं स्वपुत्रं गृहाद् विताड़यसि स्वच्छन्दम्? अविश्वास्यमेतत्। धिक् धिक्!

वरं पुष्पे कीटो वरमपि कलङ्कः शशधरे
वरं मेघोऽप्यभ्रे शिखिनि च वरं कर्कशरवः।
न तु स्वार्थान्धत्वं कथमपि जनन्यां कृतपदं
सुतैकप्राणा सा जगति पशु-पक्षिष्वपि मता २९॥

शङ्करः। परमश्रद्धेये मातृष्वसः! मां प्रति गभीर-स्नेह एव त्वां प्राण-प्रिय-भगिनीं प्रति एवंविध-कठोर-वाक्यप्रयोगाय प्रेरयति। धन्योऽस्मि। किन्तु न मम मातरमकारणं निन्द। मम मोक्षार्थमेव तया मम सन्न्यास-वरणमनुमोदितम्। मम गृहत्यागस्तस्या अपि वक्षोवेधकारि-तीक्ष्ण-शल्यसमो निःसन्देहम्। तथापि मम मङ्गलार्थम् एव सा सहास्यम् ईदृशीम् असहनीय-मनोव्यथां वृतवती निःस्वार्थभावेन। अतुलनीया मम जननी!

भगिनी। तथापि नात्मानं प्रशमयितुं समर्थास्मि। क्षमस्व माम्। (निष्क्रान्ता)

शंकरः। मातः! तव पादरजःकणिकापि मोक्षकारणं सुनिश्चितम्। तथापि जगद्धितार्थं मया अवश्यमेव प्रव्रज्या ग्रहणीया।

विशिष्टा। हृदय-मणे पुत्र! मङ्गलं ते भूयात्।

[ इति द्वितीय-दृश्यम् ]

—०—

## तृतीय-दृश्यम्

[ शङ्करस्य श्रीगुरुलाभः ]

स्थानम्—नर्मदा-तीरस्थ ओङ्कारनाथ-नामको भूभागः ।

कालः—प्रभातम् ।

( ततः प्रविशति शंकरः )

शंकरः । श्रीगुरुवन्दना, [शंकराचार्यकृत-गुर्वष्टकात् ]

षडङ्गादि-वेदो मुखे शास्त्रविद्या
कवित्वादि-गद्यं सुपद्यं करोति ।
गुरोरङ्घ्रि-पद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥३०॥

विदेशेषु मान्यः स्वदेशेषु धन्यः
सदाचार-वृत्तेषु मत्तो न चान्यः ।
गुरोरङ्घ्रि-पद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥३१॥

यशो मे गतं दिक्षु दानप्रतापो
जगद्वस्तु सर्वं करे यत्प्रसादात् ।
गुरोरङ्घ्रि-पद्मे मनश्चेन्न लग्नं
ततः किं ततः किं ततः किं ततः किम् ॥३२॥

अहो ! परमानन्दघनो विशेष-सौभाग्य-चिह्नितो दिवसोऽयम् । सुदूर-केरलस्थ-"कालाडि"ग्रामादहं नर्मदातीरस्थम् ओङ्कारनाथ-नामक-भूभागमागतः सुदीर्घ-मासद्वयेन । पन्था ह्यतिदुर्गमः । असंख्य-प्रान्तर-कान्तार-कन्दरान् असंख्य-नगर-नगरी-नद-नदी-जनपदांश्च बहु-क्लेशेन पद्भ्यामतिक्रम्य भिक्षोप-जीवी अहमत्र समुपस्थितः । तथापि नाहं विन्दुमात्रमपि क्लान्तः क्लिष्टः खिन्नो वा । प्रत्युत मम शरीरं शत-सहस्रगुण-सबलतरम् मम मनश्च लक्ष-कोटिगुण-प्रसन्नतरम् । तत् कथम् ? यतोऽहमत्रागतः श्रीगुरुमनुसन्धातुम्,

श्रीगुरुमवलोकयितुम् श्रीगुरोरमलातुल-पादपद्मं वक्षसि स्थापयितुम्, श्रीगुरोरभयाशीर्वादान् शिरसि धारयितुम् श्रीगुरोरमराशोकवाणीञ्च मनसि झंकारयितुम्।

अस्मिन् दग्ध-संसारे किं वा अस्ति श्रीगुरोः पादपद्माद् गरीयः, श्रीगुरोराशीर्वादान्महीयः श्रीगुरोर्वाण्या वरीयः? पश्य—

उत्ताल-संसार-सागरे
भासमाना नौकैका।
का सा का सा का सा वद—
श्रीगुरु-पाद-रजःकणिका ॥३३॥
दुर्गम-संसार-विपिने
धार्यमाणा यष्टिलतैका।
का सा का सा का सा वद—
श्रीगुरु-पाद-रजःकणिका ॥३४॥
अन्ध-संसार-कारागारे
दीप्यमाना शिखैका
का सा का सा का सा वद—
श्रीगुरु-पाद-रजःकणिका ॥३५॥
शुष्क-संसार-मरुस्थले
वहमाना जलधारैका।
का सा का सा का सा वद
श्रीगुरु-पाद-रजःकणिका ॥३६॥

( इतस्ततो विलोक्य ) अहो! मनोहरं स्थानमिदं तपश्चर्याया योग्यतम आश्रयः। अदूरे प्रवहति पुण्यसलिला प्रसन्न-विमला भगवती नर्मदा रविकरोज्ज्वल-सफेन-शुभ्र-तरङ्ग-भङ्गैः। अहो! मधुरातिमधुरं तस्या रूपम्! नर्तन-कुशला कलहासिनी आनन्दोच्छ्ला सा। किं वा तस्या आनन्दातिशय्यस्य कारणम्? कारणे द्वे, एकतः प्रियसमागमः अन्यतो भगवत्पूजनम्।

एकतः प्रियमेलनाकुला सा सागर-सङ्गमे गच्छति नृत्यन्ती सानन्दम् ! अन्यतः श्रीभगवत्पाद-स्पर्शकामा सा ऊर्ध्वं बाहुसहस्राणि उत्तोलयति करतालैः समानानन्देन। अहो ! अपूर्वमिदं मेलनं पार्थिव-प्रेम्णा सह भगवत्प्रेम्णः। अयं समन्वय एव ईदृश-परिपूर्णानन्दस्य जनकः। अहो मानवजीवनेऽपि ईदृशं सम्मेलनं कथं न दृश्यते ?

भगवति नर्मदे ! सर्वलोक-शर्मदायिनि ! नमस्ते ।

**स्याज्जीवनं यदि नदी क्व तदा तदीयं**
**सानन्दमुष्णशमनं परिपूर्णकान्ति ।**
**विप्र-श्वपाक-मृत-जीवित-तुल्यदर्शि**
**प्रोद्दामगामि सततं बत रूपमस्मिन् ॥३७॥**
**एतत्तु जीवनमशान्तमनल्पगर्वं**
**वैषम्यदर्शि सुखहीनमनन्ततापम् ।**
**पर्याकुलं शिथिलगामि, ततो हि नद्याः**
**कल्लोल-मात्रसमता बत जीवनस्य ( युग्मकम् ) ॥३८॥**

( ततः प्रविशन्ति कतिपये सन्न्यासिप्रवराः )

**शंकरः।** यतिवराः ! प्रणमामि भवतः।

**प्रथमो यतिः।** कस्त्वम् ? अहो ! आश्चर्य-रूपधरोऽयं बालकः। तप्त-काञ्चननिभ-तनुः, मुण्डित-मस्तकः, गैरिक-वसनः दण्डहस्तः रिक्तपदः।

**कान्तेः स्फुटत्वान्न शशाङ्क एष**
**दुग्रतेरतैक्ष्ण्यान्न सहस्र-रश्मिः ।**
**स्फुटप्रकाशोऽखरदीप्तिरम्यः**
**क एष तेजस्विवरोऽतिसौम्यः ॥३९॥**

एष सन्न्यासीति प्रतिभाति। किन्तु कथमीदृशो बालकः सन्न्यासी भवेत् ?

**द्वितीयः।** पश्य पश्य, प्रतिफलति अस्य सर्वशरीरे काचन अनुपमा भागवती दुग्रतिः। प्रतिभात्यस्य आयत-लोचनयोः काचन अपूर्वा दिव्या

करुणा। परिलक्ष्यते चास्य सुकोमलौष्ठयोः काचन अनिर्वचनीया ईश्वरीया शक्तिः। (शंकरमुद्दिश्य) वत्स! कस्त्वम्?

**शंकरः।** अहं शंकरनामधेयो दीनातिदीनः कश्चन सन्न्यासकामी जनः। केरल-देशादत्रागतः श्रीगुरु-पादस्पर्शन-लाभार्थम्।

**प्रथमः।** (सोद्वेगम्) अपि त्वं सन्न्यासकामी? आश्चर्यम्! बालकोऽपि कथं त्वं सन्न्यासकामी?

**द्वितीयः।** अपि त्वं केरल-देशादागतः? आश्चर्यम्! दूराति-दूर-दुर्गम-देशात् कथं त्वमत्रागतः?

**शंकरः।** आर्यौ! भवतोः प्रश्नद्वयस्य उत्तरे समाने एव। पश्यतां भवन्तौ सम्मुखस्थ-नर्मदा-नदीम्। चलति, सा चलति, चलति निरन्तरं निरलसं निर्भयं दूरातिदूरं सागरं प्रति। कथम्? प्रेमहेतोः—मेलन-कामिप्रेमहेतोः। तन्मेलनकामि प्रेमैव ममापि सन्न्यास-ग्रहणकामनाकारणम्, ममात्रागमनकारणम्, मम जीवन-वैराग्यकारणम्।

**प्रथमः।** अत्यद्भुतं वाक्यजालम् अस्य बालकस्य।

**द्वितीयः।** चित्तोन्मादकारि वाक्यजालम्!

**शंकरः।** केन सह मेलनम्? श्रीभगवता सह। तेन विना को वा आस्ते मेलनयोग्यः?

**प्रथमः।** किन्तु कथम् इदमेव भगवता सह मेलनस्य योग्यतमं स्थानं मन्यसे त्वम्?

**शंकरः।** शृण्वन्तु सर्वे। अत्रैव राजते श्रीगुरुवर्यो गोविन्दपाद-महोदयः। स मया श्रीगुरुरूपेण मनसा वृतः। श्रीगुरोराशीर्वादान् विना कथं श्रीभगवता सह मेलनं सम्भवति? तरणीं विना को वा सागरमुत्तरेत्? श्रीगुरुरेव संसार-सागर-तरणीरूपः। अत एव अहमत्रागतः।

**द्वितीयः।** किन्तु भद्र! न जानासि किल यत् महाभाष्यकार-पतञ्जलिस्वरूपः श्रीगुरुवरो गोविन्दपादः सहस्र-वत्सरान् व्याप्य गभीरतम-समाधिमग्नः—अस्मिन् घोरान्धकारे गिरिकन्दरे। आकुला वयं सर्वे तस्य समाधिभङ्गमपेक्षामहे रुद्धश्वासम्, किन्तु सर्वमेव व्यर्थं जातमद्यावधि।

**प्रथमः।** महामहिममयः श्रीगुरुवरः प्रखरप्रज्ञाशीलो ज्ञानिश्रेष्ठः, श्रीगौड़पादस्य शिष्यवरश्च। श्रीगौड़पादः सांख्य-वेदान्तमतयोः समन्वयकारिरूपेण सुपूजितः।

**शंकरः।** अहमपि समन्वयकामी। सर्वमतानां सुष्ठु-सुन्दर-सम्मेलनं मम हृदयोत्था शाश्वतिकी आकूतिः।

ऋषिवराः! अस्ति मम प्रवेशाधिकारोऽस्यां गुहायाम्?

**प्रथमः।** कथं न? किन्तु वत्स! सूचिभेद्यान्धकार-निमग्ना एषा गुहा। इमं प्रदीपं ज्वालयित्वा सावधानं गुहाभ्यन्तरं गच्छ। कल्याणं ते भूयात्। ( सर्वे निष्क्रान्ताः )

## पटपरिवर्तनम्

[ गुहाभ्यन्तरम् ]

( ततः प्रविशति प्रदीपहस्तः शंकरः )

**शंकरः।** अहो! रोमाञ्चित-कलेवरोऽहं श्रीगुरोर्दर्शनमात्रेण, किन्तु अलं प्रदीपेन। श्रीगुरुदेवस्य देहालोकेनैव प्रदीप्तमिदं पुण्यस्थानम्।

अहो! अपूर्वः खलु मधुरिमा श्रीगुरुदेवस्य! सहस्र-वत्सर-व्यापिनः अनशनादपि न तस्य शरीरं जातं विलुप्तं विशुष्कं विशीर्णं वा। परन्तु तस्य सर्वशरीरं पारिजात-पुष्पमिव नित्य-सतेजः नित्यसरसम् नित्यसगन्धं नित्य-सहर्षञ्च।

किमिदानीं करिष्यामि? भवतु स्तुतिमुखेन श्रीगुरुदेवमर्चयामि।

गुरुवर! श्रीगोविन्दपाद महामहिमय!
गोरक्षक सत्यविन्द पूज्यपादाम्बुजद्वय।
पादस्पर्श-लाभेन ते धन्यं धराधाम
दर्शनमात्रेण मानवः पूर्णमनस्कामः ॥४०॥

लक्षकोटी-दोषदुष्ट-पापतापमन्दिरं
रक्ष देव सेवकं मां श्रीगुरु-पदनिर्भरम्।
गुरुवर श्रीगोविन्दपाद लब्धविभूतिचय !
सर्वत्रातः सर्वविधातः सर्वभुवनमय ॥४१॥

अहो आश्चर्यम् आश्चर्यम् ! श्रीगुरुदेवस्य निष्कम्प-शरीरं कम्पते मुहुर्मुहुः। किमिदं समाधिभङ्गलक्षणम् ? आशातीतं सौभाग्यं मम। श्रीगुरुवरस्य जयः।

गोविन्दपादः। (चक्षुषी उन्मील्य) कस्त्वम् ?

शंकरः। देव ! नाहं पार्थिव-जनः, नाहं मनः, नाहम् इन्द्रियाणि, नाहम् एतेषां सर्वेषाम् आधारीभूतं शरीरम्, नाहं क्षित्यप्तेजोमरुद्व्योमरूपो वा। अहं सर्व-पार्थिव-वस्तुभिन्नः परमात्मा। अहं निर्गुणं निष्क्रियं निर्विकारं निर्विशेषं निरञ्जनं ब्रह्मैव।

नादिर्नमान्तो न च देश-कालौ
न नाम-रूपे विदिते मम स्तः।
द्वितीयहीनं पुनरस्मि तत्त्वं
सत्तास्मि सत्यञ्च तथाऽद्वितीयम् ॥४२॥

गोविन्दपादः। आश्चर्यम् ! अर्वाचीन-बालकस्य मुखे कथम् ईदृशी निगूढ़तमा तत्त्वकथा ? कथं तत् सम्भवति ? (प्रकाशम्) वत्स ! किं ते नाम ?

शंकरः। शंकरः !

गोविन्दपादः। (निपुणं निरीक्ष्य) अवगच्छामि, सर्वमहम् अवगच्छामि, स्वयं शङ्करावतारः शङ्कर एषः, यदर्थम् अहं सहस्र-वत्सरान् अपेक्षे।

शंकरः। गुरुदेव ! अहमत्रागतो भवतः शिष्यत्वग्रहणाय।

गोविन्दपादः। वत्स ! न त्वं साधारणजनान्तर्गतः, त्वं शिवावतारः। ततो यद्यपि साधारणजनरीत्या गुरुपदाश्रयणं तव न प्रयोजनीयम्, तथापि

लौकिक-प्रथया अहं सानन्दं त्वां शिष्यरूपेण वृणोमि। सर्वश्रेष्ठं दार्शनिक-मतम् अद्वैत-वेदान्ततत्त्वं धराधाम्नि प्रचारयितुं त्वमवतीर्णः। मङ्गलं ते भूयात्। मन्त्रं गृहाण। ( कर्णे कथयति )

**शंकरः।** ( प्रणम्य ) अहं तव दासानुदासः। कृपया माम् अद्वैत-तत्त्वमुपदिशतु भवान्।

**गोविन्दपादः।** शृणु प्राणाधिक ! शृणु महामहिममण्डितम् अद्वैत-तत्त्वसारम्—व्यासदेव-शुकदेव-गौड़पादैः गुरुशिष्यपरम्पराक्रमेण प्रपञ्चितम्। "सर्वं खल्विदं ब्रह्म" "तत्त्वमसि"।

**शंकरः।** ( भावाविष्टः ) "स—र्वं—म्, ख—लु—इ—दम् ब्र—ह्म !" "तत्—त्व—म् अ—सि"।

अहो ! अकस्मान्निमेषेण देहबन्धनं मम छिन्नमिव जातम्। अहो ! देहमुक्तोऽहम्। गुरुदेव ! अनुमन्यतां भवान् कृपया, अहं संसारं त्यक्त्वा पार्थिव-देहादिकञ्च परित्यज्य चिरमुक्तो भवामीति।

**गोविन्दपादः।** नहि, नहि सौम्य ! न तत् सम्भवपरं मङ्गलजनकं वा। इदम् अद्वैततत्त्वं सर्वश्रेष्ठतत्त्वम्, सर्वसमन्वयमूलकं तत्त्वम्, सर्वानन्द-जनकं तत्त्वम्। सकल-धर्मविरोधान् निःशेषं दूरीकृत्य अस्य शाश्वत-तत्त्वस्य सगौरवं स्थापनमेव तव जीवनस्य निर्दिष्ट-व्रतम्। ततो लोकहितार्थमेव जीवन्मुक्तरूपेण कियत्कालं पार्थिव-जीवनधारणं तवावश्य-प्रयोजनीयम्।

**शङ्करः।** यदाज्ञापयति देवः।

**गोविन्दपादः।** शृणु वत्स ! त्वदर्थमेवाहं सहस्र-वत्सरान् जीवनं धारयामि। त्वमपि तथैव जीवन् दिग्विजयं कुरु, दिग्विदिशं गत्वा प्रचारय महिममयं ब्रह्मतत्त्वम्, प्रचारय यत् जगति कोऽपि न जीवः किमपि न जड़ं···सर्वं एव ब्रह्म।

**शंकरः।** एतदेव मम जीवन-व्रतं भवतु।

**गोविन्दपादः।** अधुना अवसितं मम जीवनकार्यम्, उद्यापितं मम

जीवनव्रतम्, सुसिद्धं मम जीवनलक्ष्यम्। अत एवाहं समाधियोगेन देहं त्यक्त्वा विदेहमुक्तिं लप्स्ये।

**शंकरः।** गुरुदेव! प्रणमामि।

**गोविन्दपादः।** सच्चिदानन्दस्वरूपं परं ब्रह्म त्वां रक्षतु निरन्तरम्।

[ इति तृतीय-दृश्यम् ]

—:०:—

## चतुर्थ-दृश्यम्

[ शङ्करस्य अद्वैत-ज्ञानप्रकर्षः ]

**स्थानम्**—वाराणसी नगरी।

**समयः**—प्रभातम्।

( ततः प्रविशति पद्मपाद-सनन्दनसहितः शंकरः )

**शङ्करः।** अहो! महामहिममयाद् गुरुदेवात् परम-सौभाग्येन लब्धवान् अहम् अद्वैत-ब्रह्मज्ञानम्। ईदृशस्य अद्वैत-तत्त्वस्य प्रथमकथा इयमेव यत् ब्रह्म निरञ्जनं न जीवजगत्समन्वितं ब्रह्माण्डम्। ततो महान् उपनिषन्मन्त्रो निःसृत आसीत् ऋषिमुखाद् मानव-सभ्यतायाः शुभारुणोदयकाले—"नेति नेति"।

एतदनुसारेण ब्रह्म न ब्रह्माण्डम्, ब्रह्माण्डं न ब्रह्म। सत्यमेतत्।

एवं तर्हि किमिदं ब्रह्माण्डम्? किं ब्रह्माण्डं मिथ्यारूपम्? को वा एतद् विश्वसिति? किमियं मधुर-मोहना धरणी सम्पूर्णरूपेण मिथ्या? ततोऽद्वैत-तत्त्वस्य शेषकथा का?

भवतु। अलं चिन्तनेन। मनोहरां मणिकर्णिकां गत्वा पुण्य-भागीरथी-सलिले अवगाहे साम्प्रतम्। ततः समाधियोगेन विश्व-रहस्यं चिन्तयिष्यामि पुनरपि।

प्रियशिष्य सनन्दन ! न विलम्बनं कुरु, अग्रेसरो भव। मम ध्यान-समयः अतिक्रामति।

**पद्मपाद-सनन्दनः।** यथाज्ञापयति देवः। ( कियद्दूरं गत्वा प्रत्या-वृत्य च ) देव ! पश्य तु भवान्, अस्माकं मार्गोपरि शायितः कश्चिच्छवः काचन रोरुद्यमाना रमणी चोपविष्टा तत्समीपे। किं करोमि ?

**शङ्करः।** अहमेव गच्छामि। ( अग्रेसरो भूत्वा नारीमुद्दिश्य ) मातः ! कृपया मार्गं ददातु भवती आवाभ्याम्।

**नारी।** ( अशृण्वतीव ) हा हा हा ! मम प्राणप्रियः पतिदेवो मां त्यक्त्वा चिराय गतः। किम् अहम् एकाकिनी करोमि ? को वा तस्य सत्कार-व्यवस्थादिकं करोति ? अहो ज्वलति मम जीवनम्, दीनहीनाहं सर्वेषां साहाय्यं प्रार्थये। हा हा हा ! ( इति रोदिति )।

**पद्मपाद-सनन्दनः।** मातः ! आवां स्नानार्थिनौ सन्न्यासिजनौ। कृपया आवाभ्यां मार्गं ददातु।

**नारी।** हा हा हा ! मम जीवनधन पतिदेव ! कुत्र गतस्त्वम् ? अहो कथमहं जीवनं धारयामि ?

**शङ्करः।** मातः ! मम ध्यानसमयोऽतिक्रामति। ततो भवती सानुग्रहं शवदेहम् अस्माकं मार्गात् अपसारयतु अचिरेण।

**नारी।** ( अनवधानेन ) हा हतास्मि मन्दभाग्या ! मम हृदयस्पन्दन ! मम जीवनशोणित ! कुत्रासि ? हा हा हा !

**शङ्करः।** मातः ! धैर्यमवलम्बस्व। कृपया शवदेहम् अपसारयतु भवती।

**नारी।** ( सरोषम् ) आर्य ! कथं भवान् माम् आकुलां करोति अकारणम् ? किं न पश्यति भवान् यदहमधुना शोकोन्मत्ता सुस्थिरबुद्धिविहीना च ? ततो भवतः प्रयोजनमस्ति चेत् भवान् शवदेहमेव अपसरणाय अनुरुणद्धु कृपया, न मां व्याकुलां करोतु।

**शंकरः ।** जननि ! शोकावेगाद् भवती अप्रकृतिस्था जाता । शवदेहं जड़वस्तु, तस्यापसरण-शक्तिर्नास्तीति सर्वजनज्ञातम् ।

**नारी ।** (पूर्ववत् सरोषम्) किन्तु कथम ? यदि शक्ति-निरपेक्षं चेतनं ब्रह्मैव एकमात्रं तत्त्वं तर्हि ईदृशे ब्रह्मस्वरूपे जगति कथं शव-शरीरमपि न स्वयमपसर्तुं समर्थम् ?

**पद्मपाद-सनन्दनः ।** (सरोषम्) अरे शोकोन्मत्ते ! अस्माकं परम-पूज्यपादं गुरुदेवं नावहेलयतु भवती । अपि जानाति भवती तस्य परिचयम् ?

**नारी ।** (पूर्ववत्) परिचयेन किम् ? मम प्रश्नस्योत्तरं ददातु भवान् कृपया । ब्रह्मस्वरूपे जगति कथं शवदेहमपि न ब्रह्मस्वरूपम् !

**शंकरः ।** (गभीरचिन्तामग्नः) सत्यं सत्यम् ! व्यावहारिक-स्तरे किं वा निर्गुणं शक्तिनिरपेक्षं ब्रह्म करिष्यति ? तत्र शक्तिस्वरूपिणी जगज्जननी एव कर्त्री धर्त्री हर्त्री । जगति सर्वमेव सा, सा हि केवलम् ।

(प्रकाशम्) मातः क्षमतां—(इत्यर्धोक्ते) अहो आश्चर्यम् ! विलीना जाता सा नारी ! किं संघटितम् ?

**पद्मपाद-सनन्दनः ।** आश्चर्यं परमाश्चर्यम् ! उन्मुक्तो-मार्गः अस्मत्-सम्मुखे प्रसारितः । अद्भुतमिदं सर्वम् ।

**शङ्करः ।** (भावाविष्टः) इयं हि महामायालीला । व्यावहारिक-दृष्ट्या एषा महामायैव पृथिव्याः सर्वं सर्वस्वम् । न सा अवहेलनीया ।

अहो ! अकस्मान्मम मनसि उद्वेल्लति निर्झरिणीवद् भावधारा ।

"न तातो न माता न बन्धुर्न धाता
न पुत्रो न पुत्री न भृत्यो न भर्ता ।
न जाया न विद्या न वृत्तिर्ममैव
गतिस्त्वं गतिस्त्वं त्वमेका भवानी ॥४३॥
न जानामि पुण्यं न जानामि तीर्थं
न जानामि मुक्तिं लयं वा कदाचित् ।

न जानामि भक्तिं व्रतं वापि मात-
र्गतिस्त्वं गतिस्त्वं त्वमेका भवानी" ॥४४॥
( शङ्कराचार्यकृत-भवान्यष्टकीयम् )

**पद्मपाद-सनन्दनः।** अहो ! मम पुण्यश्लोक-गुरुदेवस्य मुखारविन्दम् अपूर्वमिव विराजते ! किं संघटितम् ? भवतु तं समाधिस्तरादानेतुं प्रयते। ( उच्चैः ) देवदेव ! निर्बाधः खल्वयं पन्थाः। तत आगच्छतु कृपया स्नानार्थम्।

**शङ्करः।** ( अश्रुत्वा ) अहो ! मम प्रश्नस्योत्तरं प्राप्तवानहं साम्प्रतं महामायाप्रसादेन। ब्रह्म न ब्रह्माण्डम्, ब्रह्माण्डं न ब्रह्म। तथापि ब्रह्माण्डं न शून्यं न अलीकं न असत्यम्। कुतः ? ब्रह्माण्डमेव परमशक्तेः परम-लीला। मातः, मातः, मातः ! कथमहं मातरं विस्मृतवान् ? धिक् माम्।

शीतांशुः समुदेति तन्मृदुतया तत्तेजसा भास्कर-
स्तच्छक्त्या पवनः प्रवाति कुसुमं तल्लीलयोज्जृम्भते।
भृङ्गो झङ्कुरुते यदेष विहगः कूजत्यलं यत् कलं
तत् तस्याः कमनीयतां मधुरतामाख्याति मातुर्मम ॥४५॥

ततोऽद्वयं तिष्ठतु पारमार्थिके
स्तरे परं ब्रह्म विशेष-वर्जितम्।
जगत्प्रसूः शक्तिमती जनन्यपि
न हातुमर्हा व्यवहार-सिद्धये ॥४६॥

(प्रकृतिमापद्य ) वत्स ! प्राग्रेसरो भव। बहु-समयः अपगतः।

( दूरे आर्तरवः )

( नेपथ्ये ) सर्वे सावधाना भवन्तु, सावधाना भवन्तु।

( प्रविशन्ति कतिपये पथिचारिणः )

**प्रथमः।** महाशय ! कश्चिद् भीषण-दर्शनश्चण्डालः कृतान्तसमेन कुक्कुरचतुष्टयेन सह इतस्ततः परिभ्रमति। तत् सावधाना भवन्तु भवन्तः।

**द्वितीयः।** वृद्धोऽहं किं वा करोमि ? नाहं द्रुत-धावनसमर्थः ? भवतु, इदं विपनीगृहमाश्रये। ( प्रस्थितौ )।

( ततः प्रविशति कुक्कुरैः सह भीषण-दर्शनश्चण्डालः )

**चण्डालः।** सर्वे मां दृष्ट्वा पलायन्ते सभयम्। इमे इतस्ततः परिभ्राम्यन्तः कुक्कुरा मम किङ्कराः, यमराज इव भीषणदर्शनो राजाहम्। को मां निवारयितुं समर्थः? होः होः होः!

**सनन्दनः।** (सरोषम्) अरे! असमसाहस! न पश्यसि यत् त्वं यतिवर-शङ्करस्य मार्गमवरुध्य वर्तसे? स स्नानार्थी, तस्य ध्यानसमयो बहुपूर्वमेवातिक्रान्तः; ततः क्षणमात्रमपि विलम्बो न सहनीयः, अतएव दूरमपसर दुर्वृत्त! दूरमपसर।

**चण्डालः।** कदापि न। साधारणजनव्यवहार्योऽयं मार्गः। तत एव सर्वेषां समानाधिकारोऽत्र। पादमेकं न गच्छामि। अरे भण्डसाधुवर! किं करोषि त्वमत्र? कथं न जपतपोरतोऽसि घनान्धकार-गिरिकन्दरे? हाः हाः हाः (हसति)।

**सनन्दनः।** तिष्ठ तिष्ठ रे स्पर्धाशील! तव यथेच्छं विचरणं महानिष्टजनकम्।

**चण्डालः।** (सरोषम्) किं, किं वदसि त्वम्? विपुलविक्रमः प्रचण्डप्रतापो यमराजोऽहं—को मया स्पर्धेत? हाः हाः हाः।

**सनन्दनः।** रे घृण्यजन! याहि याहि, नयनपथाद् दूरमपसर।

**शङ्करः।** वत्स पद्मपाद! नेदं परुष-वाक्यं त्वयि शोभते। किन्तु चण्डालमहोदयेन मार्गोऽवरुद्धः, ततः किं करोमि? भवतु चण्डालं तोषयामि।

आर्य! कृपया तव कुक्कुरान् अस्माकं मार्गादपसारय। बहुविलम्बो जातः। अशुचय इमे कुक्कुराः।

**चण्डालः।** (सौद्धत्यम्) अरे रे अर्वाचीन पाण्डित्याभिमानिन् भण्ड तपस्विन्! कस्त्वं मामाज्ञापयितुम्? शृणु रे महापण्डित! शृणु मद्वचनम्! तव तादृशी शक्तिरस्ति चेत् मम प्रश्नस्योत्तरं देहि, हाः हाः हाः।

**सनन्दनः।** रे वर्वर! एवं स्पर्धमानस्त्वम् अस्माकं गुरुवरम् अवहेलयसि? अहं त्वां खण्डशः कुट्टयामि।

**चण्डालः ।** होः होः होः ! क्षुद्रातिक्षुद्रः पतङ्गसमस्त्वं मां कुट्टयिष्यसि । होः होः होः ! अहं त्वां मुहूर्तेन पदतलेन कीटवत् निष्पेष्टुं समर्थः । हाः हाः हाः ।

**सनन्दनः ।** रे रे रे—

**शङ्करः ।** वत्स ! विरम विरम । जिज्ञासु-जनः पूज्य एव ।

चण्डालवर ! कस्तव प्रश्नः ? तं निर्भयं ब्रूहि ।

**चण्डालः ।** एष महावीरः कस्मादपि न बिभेति । ततः शृणु । कं त्वम् कुक्कुरापसारणार्थम् आदिष्टवान् ? किं ममात्मानं देहं वा ?

**शङ्करः ।** ( स्वगतम् ) अहो प्रगाढ़-ज्ञाननिष्णातोऽयं चण्डालः । अन्यथा कथमिमं निगूढ़तमं प्रश्नं करोति ?

**चण्डालः ।** यदि आत्मानम् आदिष्टवान, तदा निर्गुण-निष्क्रियस्यात्मनः अपसारण-क्रियायां कर्तृत्वासम्भवाद् व्यर्थस्तवादेशः । अथ चेद् देहमादिष्टवानसि तदपि व्याहतम्, देहस्य जड़स्वभावतया तवादेश-सहस्रेणापि गति-सम्पादनासम्भवाद् ।

**शङ्करः ।** सत्यम्, सत्यम् ।

**चण्डालः ।** अपि च, शृणु रे मूर्ख ! तव अद्वैत-मतानुसारेण "सर्वं खल्विदं ब्रह्म", ततः पृथिव्याः सर्वमेव वस्तु ब्रह्म । त्वं ब्राह्मणो महापण्डितो यथा ब्रह्म, तथाहं चण्डालो महामूर्खोऽपि । तव पाण्डित्यगर्वी वाचालः शिष्यधुरन्धरो यथा ब्रह्म, तथा ममादरणीया एते कुक्कुरा अपि । अप्येतत् सत्यं न वा ?

**शङ्करः ।** सत्यम्, सत्यम् ।

**चण्डालः ।** त्वम् अद्यापि ब्राह्मण-चण्डालयोः मानव-कुक्कुरयोश्च भेदं पश्यसि चेत् तव अद्वैत-वेदान्तमतम् असमीचीनं जलबुद्बुदवद् वहिःसुन्दरम अथ च अन्तः सारशून्यम् । श्रुतम् एतत् ? अपि श्रुतं श्रुतम् ?

> **यावन्न धूलीकणयाऽपि तुल्य**
>
> **आत्मा समालोकयितुं सुशक्यः ।**

अद्वैत-वेदान्त-विचार-चर्चा
तावज्जनानां विफला विशेषात्।
तत्त्वं तदेतत् सरलं त्वया किं
न ज्ञातमद्यापि सुपण्डितेन ? ॥४७॥ ( अन्तर्धत्ते )

शङ्करः। (सनन्दनमुद्दिश्य) गच्छ त्वं स्नानार्थम्, अहं प्रत्यावर्तिष्ये।

सनन्दनः। कथं देव !।

शङ्करः। (अश्रुत्वा) अहो उन्मीलिता मम दिव्यदृष्टिः! "सर्वं खल्विदं ब्रह्म" इति तत्त्वतो मनोहरं किन्तु व्यवहारतः सुकठिनम्।

अहो ! श्रीभगवान् एव स्वयं माम् उपदिष्टवान् परमकृपया शवसहित-नारी-कुक्कुरसहित-चण्डालरूपेण दूतद्वयेन।

विश्वसमस्यायाः समाधानमत्रैव राजते। ब्रह्म न ब्रह्माण्डम् इति सत्यम्, ब्रह्माण्डं न ब्रह्म इत्यपि सत्यम्। तथापि ब्रह्मैव ब्रह्माण्डम् इति समानसत्यम्, ब्रह्माण्डम् एव ब्रह्म इत्यपि समानसत्यम्। कथम् ? ब्रह्माण्डं ब्रह्मणो भिन्नमिव प्रतिभाति चेत् ब्रह्माण्डं न ब्रह्म। पुनः, ब्रह्माण्डं ब्रह्मणः अभिन्नमिव उपलभ्यते चेत् ब्रह्माण्डं ब्रह्म।

सनन्दनः। अहो ! अत्याश्चर्यम् इदं मतम्।

शङ्करः। एतदेव अद्वैत-मतस्य सारस्वरूपम् ब्रह्माण्डं ब्रह्म।

( दूरे डमरुध्वनिः पुष्पवृष्टिश्च )

अहो ! काशीनाथः शिवोऽत्राविर्भूतः ! परम-सौभाग्यं मम ! देवदेव ! प्रणमामि भवन्तम्।

"पशूनां पतिं पापनाशं परेशं
गजेन्द्रस्य कृत्तिं वसानं वरेण्यम्।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं
महादेवमेकं स्मरामि स्मरारिम्" ॥४८॥

( शङ्कराचार्यकृत-शिवाष्टकम् )

**महादेवः।** वत्स ! सार्थिका खलु तव साधना। वेदान्तमूलकं सनातन भारतीयधर्मं त्वमेव जगति प्रचारयिष्यसि। ततः प्राथम्येन ब्रह्मसूत्राणां नवीनं भाष्यं रचय लोकहितार्थम्। ततः परमिमम् अमृतघनं वैदिकधर्मं लोकसमाजे स्थापय। सार्थकं भवतु नाम तवारुणोज्ज्वलं तरुणं जीवनम्।

**शङ्करः।** देवदेव ! तवाज्ञामहं शिरसि धारयामि।

( महादेवो विलीनः )

( सनन्दनमुद्दिश्य ) वत्स ! अहं गमिष्यामि श्रीवदरिकाश्रमपदं ब्रह्मसूत्र-भाष्यरचनाय। त्वमपि मया सहागच्छ।

**सनन्दनः।** धन्योऽस्मि।

## इति चतुर्थ-दृश्यम्

## पञ्चम-दृश्यम्

[ शङ्करस्य वेदान्तसूत्रभाष्यरचना ]

**स्थानम्**—वदरिकाश्रमस्थ-व्यासतीर्थम्।

**समयः**—पूर्णिमारात्रिः।

( ततः प्रविशति शङ्करः प्रफुल्लवदनः )

**शंकरः।** अहो ! मधुरिममयी पूर्णिमारजनी ! सप्ताहकालमहं भाष्य-रचना-साधनायां निमग्न आसम्। न ज्ञातवान् को वा जीवः को वा जडः,को वा दिवसः को वा निशीथः, किं वा भोजनं किं वा शयनम् इति। तदा पार्थिव-जगतो वहूर्ध्वें विराजितवानहम्, ब्रह्मलोकादालोकधारा मम घोरान्धकार-हृदयकन्दरे प्रविश्य तं प्रादीपयत्। सा आलोकधारैव मम दीन-लेखनीप्रसूत-ब्रह्मसूत्रभाष्यरूपेण आत्मानं प्रकाशितवती। ततो नेदं भाष्यं ममालोकः, केवलं ब्रह्मालोक एव—मम जन्मजन्मान्तरसञ्चित-पुण्यार्जितो ब्रह्मालोक एव।

**य ऊर्ध्वादालोको हृदयमवतीर्णो मम महान्**
**स्वभावादेवैष प्रसरति चतुर्दिक्षु सततम्।**

न माहात्म्यं किञ्चिन्मम लघुमतेरत्र विषये
प्रकृत्यैव ज्वाला विलसति किलोर्ध्वं हुतभुजः ॥४९॥

अधुना सप्ताहान्ते प्रथमं नयने उन्मीलयामि पार्थिवरीत्या। अहो! सुन्दरतमः समयः नयनोन्मीलनाय। यत इयं रजनी सर्वशुक्लासमागमधन्या। मन्ये अद्य रात्रौ धरणीधूलिधोरणितले सर्वशुक्लायास्तस्याः संवर्धनासभा। तत एव चतुर्दिक्षु एतादृशः शुभ्रता-समारोहः। शुभ्र-चन्द्रिकारूपश्चन्द्रातपः, शुभ्र-हिमाचलरूपं विजयसिंहासनम्, शुभ्रालकानन्दारूपं माङ्गल्य-माल्यञ्च। अहो!

( पूर्णिमारजनी-वन्दना )

सुनील-गगने शीतलपवने
चलति ज्योत्स्ना-तरणी।
ऊर्मिमूलिका मेघमालिका
नृत्यति मानसभरणी ॥५०॥
वात-वसनधर- विभु-मदनहरः
शशधर-धवल-शरीरः।
याति सारदां वरेण्य-वरदां
मिलितुं प्रणयाधीरः ॥५१॥
दयित-तोषणीं दुरित-मोचनीं
दुर्गां जननीं वन्दे।
दुर्गत-धरणीं रक्ष दोषिणीं
दयस्व चिरमयि मन्दे ॥५२॥

( ततः प्रविशन्ति शिष्याः )

पद्मपाद-सनन्दनः। ( सानन्दम् ) गुरुदेव! भवन्तं प्रणमामि।

अन्ये। भवदाशीर्वादं वाञ्छामः, देवदेव!

सनन्दनः। अपि अवसितं भवतः प्रारब्धकार्यम्?

शंकरः। वत्साः! कल्याणं वो भूयात्। न किञ्चिदपि अवसितम्।

यावज्जीवनं तावदेव कर्माणि। वस्तुतस्तु जीवनं कर्मविशेषः, लक्ष्यविशेषो व्रतविशेषश्च। ततो जीवनं सर्वदा चलति, चलति चलति।

**प्र-शिष्यः।** सत्यम्। अथ चलतो जीवनस्य क्व परिणामः क्व परिपक्वता क्व वा प्रकर्षः ?

**शंकरः।** एकस्यां ब्रह्मोपलब्धौ एव तस्य परिणामः, परिपक्वता प्रकर्षश्च। अविरल-जीवनगतेस्तत्रैव हि स्थितिः।

**सनन्दनः।** किन्तु देव! गतिस्थिती परस्परविरोधिन्यौ। ततः कथं गतिः स्थितौ परिणमेत ?

**शंकरः।** पश्य वत्स! पश्य। नित्यगमनशीला नदी समुद्रे स्थितिं लभते। ततः पूर्वं तस्या निरन्तर-गमनम्, निरन्तर-चाञ्चल्यम्, निरन्तरहास्यं लास्यञ्च। किन्तु सागरसङ्गमात् परम्? तदानीं शान्तं सर्वम्। पश्य, प्रारम्भे मुहुर्मुहुः उच्चैर्गर्जनशीलः शून्यगर्भो मेघः। परिशेषे वारिवर्षणकारी स स्थिरो धीरो गम्भीरश्च। पश्य, प्रारम्भे फलपुष्पहीनो वृक्षः नितराम् आन्दोलितो वायुवेगेन। अन्ते पुनः फलभारनतः स स्वगौरवेण महिममयः।

वत्साः! तद्वद् गतिः प्रारम्भः, स्थितिश्च परिशेषः। अत एव कर्मसहितं कर्मरहितञ्च पन्थानमवलम्बध्वम्।

**शिष्याः।** गुरुदेव! कृतार्था वयम्।

**शंकरः।** अहं दिग्विजयाय श्रीगुरुदेवेन श्रीमहादेवेन चादिष्टः, किन्तु ईदृक् दीन-हीन-क्षीण-जनः कथं तत् कर्तुं शक्नोति? तथापि गुरोः श्रीगोविन्दपादस्य गुरोर्गुरोः श्रीमहादेवस्य च आज्ञाऽवश्य-पालनीया।

अत एवाहं देशभ्रमणाय वहिर्गच्छामि एकाकी। वत्साः! महिममयम् अद्वैततत्त्वं रक्षत प्राण-पणैः।

**सनन्दनः।** नहि, नहि गुरुदेव! अहमपि भवता सह गमिष्यामि।

**अन्ये।** वयमपि गमिष्यामः।

**शंकरः।** इतोऽधिक आनन्दः को वास्ति मम जीवने? किन्तु प्राण-प्रतिमाः! अतिदुर्गमः पन्थाः दुर्लङ्घ्य-बाधाप्रधूपितः, दुर्जेय-शत्रुमथितः,

दुःसह-दुःखप्रपीड़ितश्च। किन्तु इयं मम जीवनैषणा जीवनसाधना जीवनाराधना च। यावदियम् एषणा परिपूर्णा न भवेत्, यावदियं साधना परिषिद्धा न भवेत् इयम् आराधना परिसमाप्ता न भवेत् तावन्मम जीवनमपि शून्यं क्षुण्णं दीर्णं जीर्णञ्च विराजेत सुनिश्चितम्। किञ्च—

निःशेषं कुरुते स्वमेष जलदो वर्षंश्चलन्ती नदी
पुष्पं सौरभमर्पयत् तरुरपि प्रायः फलान्युत्सृजन्।
तद्वद् घोषयतश्चिरं दिशि दिशि ब्रह्मेति पुण्याभिधां
लीनं स्यान्मम जीवनं यदि ततः काम्यं किमन्यद् भवेत् ॥५३॥

किन्तु युष्माकं नवीन-पवित्र-जीवनं नेदृश-गुरुभाराक्रान्तम्। ततः कथं यूयमकारणं मम दुष्कर-व्रतसहचारिणो भवितुं यतध्वे, निर्भयनिर्विवाद-जीवनधारां परित्यज्य ?

**सनन्दनः।** नहि, नहि गुरुदेव ! भवदभाव एव मम जीवनस्य दुर्लङ्घ्यतमा बाधा, दुर्जेयतमः शत्रुः दुःसहतमं दुःखञ्च।

**प्रथमः।** ममापि, गुरुदेव ! ममापि।

**द्वितीयः।** ममापि, गुरुदेव ! ममापि।

**सनन्दनः।** ततो भवतः पुण्य-सङ्गलाभार्थं भवता सह देशाद् देशान्तरं गमिष्यामो वयम्। अहो ! चिन्तनमात्रेण रोमाञ्चित-कलेवरो भवामि। अहोरात्रं भवतः श्रीमुखदर्शनम्, अहोरात्रं भवतः श्रीपाद-स्पर्शनम्, अहोरात्रं भवतः श्रीवाणीश्रवणम्—अतः परं किमस्ति वाञ्छनीयतरम् वरणीयतरम् वन्दनीयतरञ्च।

**अन्ये शिष्याः।** अहो सौभाग्यम् ! अहो सार्थक्यं जीवनस्य !

**शंकरः।** एवं चेद् विलम्बो न करणीयः। मासमात्रेणाहं द्वादशोपनिषद्-भाष्याणि, श्रीमद्भगवद्गीताभाष्यम्, विष्णुसहस्रनामभाष्यम्, सनत्सुजातीय-भाष्यञ्च रचयिष्यामि। ततः परं मम प्राणप्रिय-शिष्यदलेन सह वहिर्गमिष्यामि ब्रह्माण्डे ब्रह्ममहिम-कीर्तनार्थम्। अहो धन्यातिधन्यं मम जीवनम्।

जानीत किल यूयम् यद् ब्रह्मनामचिन्तनेनापि मुक्तिः, ब्रह्मनाम-लेखनेनापि मुक्तिः, ब्रह्मनामोच्चारणेनापि मुक्तिः। अयमेव महिमा ब्रह्मनाम्नः। ततः—

ब्रह्मनाम ब्रह्मनाम ब्रह्मनाम केवलम्।
ब्रह्म लसतु ब्रह्म हसतु ब्रह्म दिशतु मङ्गलम् ॥५४॥

**सनन्दनः।** अपूर्वा खल्वियं प्रार्थना! इयं विश्व-ब्रह्माण्डस्य सर्व-जनीना सर्वकालीना च प्रार्थना। सफला भवतु नाम सा आचार्यवरस्य साहायकेन।

**शंकरः।** वत्साः! ब्रह्म एव सर्वेषामाश्रयो भवतु।

**इति पञ्चम-दृश्यम्**

—:०:—

## षष्ठ-दृश्यम्

[ शङ्करस्य आनन्द-तत्त्वलाभः ]

**स्थानम्**—गोमुखी।

**समयः**—प्रभातम्।

( ततः प्रविशति सशिष्यः शङ्करः )

**शङ्करः।** आगता वयं पुण्यतम-गोमुखी-भूभागम्। मन्ये मर्त्यसीमारेखा अत्रावसिता। सत्यम् इदमेव स्वर्गस्थानम् नान्यत्। ऊर्ध्वे अन्तहीनं नभस्तलं प्रसारितं सर्वदिशि, मध्ये उत्तुङ्गो हिमाचलः उत्थितो गगनं भित्त्वा, निम्ने आनन्दोच्छला भागीरथी प्रवाहिता त्रिभुवनं व्याप्य। अहो! भूम्ना सह भूम्नः अतुलनीयं मेलनम्। ततः—

महान् हिमाद्रिर्महदन्तरीक्षं
भागीरथीयं महती पुरस्तात्।
महद्भिरेतैर्मिलितैर्मिलन्तु
चित्तानि नः शङ्कित-कुञ्चितानि ॥५५॥

इति मम ऐकान्तिकी प्रार्थना श्रीब्रह्मचरणे।

सत्यं हि, विश्वप्रकृतिः परस्य
प्रतिच्छविर्मूर्तिमतीव भूम्नः।
स्फुरत्यतोऽस्यां प्रकृतौ सदैव
ब्रह्मैकनिष्ठः परभूमभावः ॥५६॥

तथाहि—

द्वारं न तस्याः पिहितं हि किञ्चिन्-
न प्रान्तरं सीमितमस्ति वृत्या।
न दुर्लभं कन्दरमस्ति किञ्चिन्-
मुक्तं नभोऽवारित एव वायुः ॥५७॥

भवेदुदारं हृदयं नृणां चे-
दुपेत्य सङ्गं प्रकृतेः कथञ्चित्।
शक्नोति चास्वादयितुं तदेताम
असीमतां ताञ्च विमुक्तताञ्च ॥५८॥

सनन्दनः। आचार्यवर! पश्यतु भवान् हरिगुणगानरताम् आनन्द-लहरीरम्यां श्रीगङ्गाम्। नवीना श्रीमाता चपल-कोमल-कुमारीवद् गायति कलकल-कलित-कोकिलविजयि-कमनीय-सहस्रस्वरैः, नृत्यति मञ्जुल-मञ्जीर-शिञ्जित-रमणीय-सहस्रचरणैः।

शङ्करः। (गङ्गां स्तौति)

देवि सुरेश्वरि भगवति गङ्गे!
त्रिभुवनतारिणि तरलतरङ्गे!
शंकरमौलिविहारिणि विमले!
मम मतिरास्तां तव पदकमले ॥५९॥
पतितोद्धारिणि जाह्नवि गङ्गे!
खण्डित-गिरिवर-मण्डित-भङ्गे!

भीष्मजननि ! खलु मुनिवरकन्ये !
पतितनिवारिणि ! त्रिभुवनधन्ये ॥६०॥
( शङ्कराचार्यकृत-गङ्गास्तोत्रम् )

**सनन्दनः।** आश्चर्यम् आश्चर्यम् ! कथमकस्मात् श्रीगुरुदेवस्य ईदृशं भाववैक्लव्यम् ? तस्याननमण्डलम् आनन्दप्रोज्ज्वलं भाति सहस्रकिरणैरिव। कम्पते तस्य कम-शरीरं भावावेगेन मुहुर्मुहुः। कथम् ?

**शंकरः।** ( भावाविष्टः ) अकस्मान्मम मनसि उदित आनन्द-रविः विमल-विभया शोकान्धकारं निमेषादपसार्य ! आनन्दस्वरूपं ब्रह्म, आनन्दस्तस्य स्वरूपसारः। अतएव ब्रह्मणोऽभिन्नं ब्रह्माण्डमपि आनन्दस्वरूपं सुनिश्चितम्।

**सनन्दनः।** किन्तु आर्य ! इयं धूलिधोरणिधृत-धरणी कथम् आनन्द-स्वरूपा स्यात् ? न पश्यामि तस्यास्तल्लक्षणं किञ्चिदपि।

**शंकरः।** वत्स ! नयनावरणम् उन्मोच्य पुनरपि पश्य, पश्य आनन्दोच्छलां श्रीभागीरथीम्। ईदृश-हास्यलास्यानि प्रमाणयन्ति—एकमेव तत्त्वम्—आनन्द-तत्त्वम्। पृथिव्यां प्रतितृणगुच्छं प्रतिवारिविन्दु प्रतिधूलिकणं ब्रह्म—केवलं ब्रह्म, सर्वदा ब्रह्म, सर्वथा ब्रह्म। अत एव पृथिव्याः प्रतिधमनि, प्रतिनिश्वासम्, प्रतिहृत्स्पन्दनम्, प्रतिरक्तकणं ब्रह्म, केवलं ब्रह्म, सर्वदा ब्रह्म, सर्वथा ब्रह्म। सौम्य ! तम् आनन्दम् एव तव जीवने प्रतिफलय। कोऽयमानन्दः ? शृणु,

आनन्दो जीवनाब्जस्य वर्णो नित्योज्ज्वलः परः।
मधु चोच्छलितं नित्यं गन्धोऽपि च चिरोच्छलः ॥६१॥
आनन्दो जीवनधुनेर्धारा नित्य-पुरःसरा।
चिरोत्थितस्तरङ्गः स चिरगुञ्जन् कलध्वनिः ॥६२॥
आनन्दो जीवने यज्ञे मन्त्रोच्चारश्चिरन्तनः।
आहुतिर्नित्य-निक्षिप्ता स्तुतिर्नित्यसमुत्थिता ॥६३॥
आनन्दो जीवनोद्गीथे स्वरो नित्य-समुत्थितः।
नित्य-लीलायितं छन्दो नित्य-निर्गत-मूर्छना ॥६४॥ (कलापकम्)

**सनन्दनः।** कृतार्थोऽस्मि। मम चित्त-कन्दरे य आनन्दप्रदीपो भवताऽद्य प्रज्वलितः तस्य शिखा कदापि मम जीवने न निर्वाणा भविष्यति। समग्रे जगत्यपि भवान् ईदृशानन्द-प्रदीपं प्रज्वलयतु कृपया।

**शङ्करः।** स एव मम जीवनाभिलाषः। वत्स ! कुरु आनन्दगीतिम्।

**सनन्दनः।** ( सङ्गीतम् )

आनन्दो गगने पावने पवने
आनन्दो विलसतु तारखे तपने।
आनन्दो विकशतु वरवनोपवने
आनन्दो विहसतु कामले कमने ॥६५॥

**शङ्करः**—भवतु तत्, वत्स, भवतु तत्।

**सनन्दनः**—अहो। ( सङ्गीतम् )

ज्वलति मनसि मम वितमसि निरुपम-दीपः शाश्वतसुखमय एषः।
अलब्ध-सुप्तेस्तस्य हि दीप्तेर्भविता क्वचिदपि न खलु विनाशः ॥६६॥
सुखमय-गीतं यदस्ति रणितं भविता स्तब्धस्तस्य न घोषः।
सुखमयममृतं यदस्ति गलितं तस्य न जनिता क्वचिदपि शेषः ॥६७॥
ब्रह्मालोके तत्र विलोके परमात्मानं चिरमक्लेशः।
तत्र च घोषे वत शुश्रूषे परमात्मीयां वाचमदोषः ॥६८॥
तदमृत-भक्ष्ये स्वदितुं शक्ये परमात्मीयं रसमपरोषः।
वत मम भाग्यं वत वैराग्यं शाश्वत-शान्त्या सह सन्तोषः ॥६९॥
(कलापकम्)

इति षष्ठ-दृश्यम्

—०—

## सप्तम-दृश्यम्

[ शंकरस्यायुर्लाभः ]

स्थानम्—उत्तर-काशी।

समयः—प्रभातम्।

( ततः प्रविशति वृद्ध-ब्राह्मणसहितः सशिष्यः शंकरः )

शङ्करः। प्रणमामि भवन्तं ज्ञानवृद्धम्।

ब्राह्मणः। कल्याणं ते भूयात्।

शङ्करः। सप्ताहं यावद् भवान् कृपया मया सह तर्कयुद्धे प्रवृत्तः। किं भवान् मम भाषण-व्याख्यानालोचनादिभिः परितुष्टः ?

आनन्दगिरिः। कोऽत्र अपरितोषस्य हेतुः ? ( ब्राह्मणमुद्दिश्य ) भवान् वयोवृद्धः, न जाने ज्ञानवृद्धो न वा। तथापि अस्माकं पूज्यपादेन आचार्य-प्रवरेण भवतः प्रीतिसम्पादनाय बहुसमयो व्ययितः। ततः साम्प्रतं विरमतु भवान्।

शंकरः। तात ! विरम त्वमेव। अतिथि-जनानामवमानना न त्वयि शोभते। पश्य,

गृही वा न्यासी वा गृहमुपगतो यस्तु गृहिणां
स सम्पूज्यस्तेषामतिथिरतिदेवः पर-गुरुः।
तरङ्गैरुत्ताले दुरभिगम-संसार-जलधौ
दृढः पोतः पादाम्बुज-रजकणोऽप्यस्य सततम् ॥७०॥
निरालोके व्यालायुत-निचित-संसार-गहने
स्मितं चास्यात्यल्पं ज्वलदमल-दीपप्रतिनिधिः।
अमुष्याशीर्धूपायित-कठिन-संसारमरुषु
स्रवद्धारा वारां गलितहिमसारा सुविमला ॥७१॥(युग्मकम्)

आनन्दगिरिः। देव ! क्षमां याचे।

**ब्राह्मणः।** आर्य ! परिपूर्ण-परितुष्टोऽहं तव प्रगाढ़-प्रज्ञापूतेन भाषणेन । का तव तुलना जगति ? शङ्कर ! त्वं जगतः शङ्करः—मङ्गलसाधकः। विश्व-प्रिय ! विश्वस्य प्रियं कुरु निरन्तरम्।

**सनन्दनः।** (साश्रुनेत्रः) किन्तु पूज्य महाशय ! न जानाति किल भवान्, यत् अस्माकं गुरुवरः षोडशवर्षे वर्तते साम्प्रतम्।

**ब्राह्मणः।** ततः किम् ?

**सनन्दनः।** (रोरुद्यमानः) तस्यायुष्कालः षोड़श-वर्ष-परिमितः केवलम्। किं वयं करिष्यामः ? आचार्यहीनं जीवनं मरण-सममेव सुनिश्चितम्।

**ब्राह्मणः।** मा भैषीः, मा भैषीः, न शोकाकुलो भव। नेदं संघटिष्यते।

**आनन्दगिरिः।** कथं, कथं न संघटिष्यते ?

**सनन्दनः।** अपि भवान् त्रिकालज्ञो दैवज्ञः ? कथयतु अस्मान् दैवगणना-फलं भवान्! आकुला वर्तामहे वयं सर्वे !

**शंकरः।** वत्साः ! मा यूयं सम्माननीयम् अतिथिवरम् आकुलं कुरुत। सन्न्यासि-जनो मरणान्न विभेति।

**सनन्दनः।** (अश्रुत्वेव) आर्य ! कथयतु भवान्, कथयतु अस्मान् भवन्तो दैवगणनाफलम्।

**ब्राह्मणः।** नेयं दैवगणना। इदं श्रीभगवतो विधानमेव। तद्विधानानु-सारेण आचार्यवरस्य आयुष्कालः द्वात्रिंशद्वर्षपर्यन्तं प्रसृतः।

**शिष्याः।** (सानन्दम्) जयः श्रीगुरुदेवस्य जयः, जयो ज्ञानवृद्ध-ब्राह्मणस्य जयः।

**सनन्दनः।** पूज्य महोदय ! कथं भवान् इदं ज्ञातवान् ? अपि सत्येयं भविष्यद्वाणी ?

**ब्राह्मणः।** सत्येयम् अक्षरशः। न पर्याकुलो भव।

**सनन्दनः।** (बद्धाञ्जलिः) देव ! को भवान् ?

तेजोदीप्ता सुप्रसन्ना मुखश्री-
र्वाचां भङ्गी प्राज्य-पाण्डित्यपूर्णा ।
ज्ञानं चैतत् सर्वशास्त्रावगाहि
प्रत्याचष्टे मर्त्यभावाद् भवन्तम् ॥७२॥

तद् ब्रूवीतु—अपि भवान् छद्मवेशी देवविशेषः ?

ब्राह्मणः । (विहस्य) नाहं देवविशेषः, वेदव्यासः खल्वहम् ।

शङ्करः । आदिगुरुर्वेदव्यासः ? अहो ! आशातीतं मम सौभाग्यम् ।

सर्वे । जयतु जयत्वादिगुरुर्वेदव्यासः ।

वेदव्यासः । पण्डितप्रवर ! त्वद्रचितानि भाष्याणि पठितुमिच्छामि ।

शंकरः । कृतकृतार्थोऽस्मि । (भाष्याणि ददाति) ।

वेदव्यासः । (निमेषेण पाठं समाप्य) अतुलनीयान्येतानि सर्वाणि । यद्यपि त्वं वयसा नवीनः, तथापि तव प्रज्ञा प्रगाढ़ा, रमणीया व्याख्या च वरिष्ठा ।

यतिवर ! न विलम्बं कुरु । घन-तमिस्राच्छन्ना धरणी पापदष्टा तापक्लिष्टा द्वेषनष्टा च । सा क्रन्दति मोक्षार्थम् अहोरात्रम् । वत्स ! शीघ्रं गच्छ तस्याः परित्राणाय ; गच्छ, गच्छ तस्याः करुण-नेत्राभ्यां अश्रूणि प्रमार्जितुम्, तस्या विचलित-चित्तात् मोहं दूरीकर्तुम्, तस्याः सङ्कीर्ण-जीवनात् शङ्कां नाशयितुम् । पतितपावन ! गच्छ, गच्छ, अविलम्बं गच्छ ।

अज्ञान-नीहारसमावृतं सज्-
जातं समग्रं जगदन्धकारम् ।
हिंसानलेनास्ति च तद् विदग्धं
प्रविद्धमात्यम्भरिता-शरेण ॥७३॥
तमन्धकारं क्षिणु भानुवत् त्वं
गङ्गेव निर्वापय चानलं तम् ।
शरं तमुत्पाट्य शल्यविद्वद्-
भवत्वदीनं जगदद्य दीनम् ॥७४॥ (युग्मकम्)

**शंकरः।** यदाज्ञापयति देवः!

**शिष्याः।** जयतु भुवनत्राता श्रीशङ्करः। जयतु मोक्षदाता श्रीशङ्करः। जयतु सर्वधाता श्रीशंकरः।

( इति सप्तम-दृश्यम )

## अष्टम-दृश्यम्

[ शंकरस्य दिग्विजये कुमारिलविजयः ]

**स्थानम्**—प्रयागः।

**समयः**—प्रभातम्।

( ततः प्रविशति कुमारिल-भट्टः )

( घोर-कोलाहलः ) ( अग्निस्तुतिः )

**कुमारिलः।** प्रज्वलितस्तुषानलः। अहं मुहूर्तेन चितां प्रविशामि।

**प्रथमः शिष्यः।** ( रोरुद्यमानः ) गुरुदेव! गुरुदेव! विरमतु, विरमतु भवान् कृपया। कथं भवान् तुषानले आत्मानं निक्षिप्य प्रायश्चित्ताय समुद्यतः? को नाम भवतोऽपराधः?

**द्वितीयः।** सत्यम्। भवान् वैदिक-धर्मस्थापनार्थं धराधाम्नि आगतः। ततः कथं भवान् अग्नौ आत्माहुतये कृतसंकल्पः?

**कुमारिलः।** वत्साः! न शोकाकुला भवत यूयम्। ममात्मविसर्जनं चित्तशुद्धयर्थं केवलम्। अशुद्ध-चित्तोऽहं कथं वा जीविष्यामि? ततः प्राणप्रियाः! नोद्विग्ना भवत, अहं मुहूर्तेन प्रज्वलितां चितामारोहामि। ( विलोक्य ) अहो प्रचण्ड-पावक इव को नु आयाति?

ज्वलत्यूर्ध्वे भानुर्विपुल-बलदेगेन गगने
कृशानुश्चाधस्ताज्ज्वलति विचलल्लोलरसनः।
परं योऽयं मां प्रत्यभिसरति वेगेन महता
तदीयालोकस्तु व्यजयत तयोः संहत-रुचम् ॥७५॥

इह हि—

आस्ते रवेरुज्ज्वलता न तापो
वह्नेः शुचित्वं न च दाहकत्वम् ।
जाने जनान् मोचयितुं दूरलोका-
दालोक एष प्रसृतोऽत्र लोके ॥७६॥

( दूरात् शङ्करमुखनिःसृत-ब्रह्मस्तुतिः )

अखण्ड-खण्डं न च दण्ड-दण्डरं
कालोऽपि जीवो न गुरुर्न शिष्यः ।
ग्रहो न तारा न च मेघमाला
तस्मै नमो ब्रह्म-निरञ्जनाय ॥७७॥

( शंकराचार्य-कृत-निरञ्जनाष्टकम् )

( ततः प्रविशति सशिष्यः शङ्करः )

**शङ्करः ।** बहुदूरादहमत्रागतः आचार्य-वरस्य कुमारिल-भट्टपादस्य श्रीपादयुगलदर्शनाय । कुत्र स महात्मा ?

**कुमारिलः ।** अहमेव स दीनहीनो जनः । को भवान् ?

**शंकरः ।** अहमद्वैत-ब्रह्मतत्त्वप्रचारकः अधमाधमः शंकरः ।

**कुमारिलः ।** ( चकितः श्रीशंकराचार्यः ? अहो मम दीर्घकालपोषिता आशा अद्याकस्मान्मुकुलिता जाता । आचार्यवर ! प्रणामाञ्जलिं गृहाण कृपया ।

( **स्वगतम्** ) अहो ! मधुरतमं रूपमस्य बालकस्य । वयसा नवीनोऽपि अयं ज्ञानेनातिप्रवीणः । धन्यं मम जीवनम् एतादृशस्य महात्मनो दर्शन-लाभात् ।

( **प्रकाशम्** ) महासौभाग्यं मम भवद्दर्शनात् । देव ! किं भवतः प्रयोजनं मादृशेन अधमाधमेन जनेन ?

**शंकरः ।** महासौभाग्यं ममैव, न भवतः । अहो ! बहुकष्टेनाहं लब्धवान् भवतः सङ्गम् ।

**कुमारिलः ।** धन्योऽस्मि । किन्तु कथं भवान् मम सङ्गलाभार्थं व्याकुलो जातः ? कथं वा मादृग्दीनहीनजनो भवत्सदृशं प्रज्ञागरिष्ठं वीर्य-

वरिष्ठम् आनन्दमहिष्ठं तापसवरं सेवितुं शक्नोति ? मया भवतः प्रयोजनं वा किम् ?

**शङ्करः।** ( विहस्य ) प्रयोजनम् ? प्रयोजनम् एतद् यत्—अहं भवन्तं वलिरूपेण कामये।

**कुमारिलः।** ( आश्चर्यान्वितः ) वलिरूपेण ? तत् कथम् ?

**शंकरः।** वाढ़म्, वलिरूपेण, मम पूततमाद्वैत-वेदान्तयज्ञस्य प्रथम-वलिरूपेण।

**कुमारिलः।** आर्य ! न सम्यग् बुध्ये ! कृपया सर्वं वृत्तान्तं कथयतु भवान्।

**शंकरः।** शृणोतु भवान्। अहं गुरोरादेशानुसारेण निखिले विश्वे सनातन-वेदमूलकं भारतीय-धर्मं प्रचारयितुं वहिर्गतः। इयं मम दिग्विजय-यात्रेति कथ्यते। वस्तुतस्तु इयं मम आत्मजययात्रा, यत आत्मजित् एव विश्वजित्, नान्यः। अस्यां जययात्रायां भवानेव प्रथमं जेतव्यः, यतोऽधुना भवानेव भारतवर्षस्य ज्ञानिश्रेष्ठः ( हसति )।

**कुमारिलः।** ( विहस्य ) एवं तर्हि किमर्थमहं जेतव्यः ? यतोऽहमपि वैदिक-धर्मरक्षक आजीवनम्।

**शंकरः।** तथापि भवान् निरीश्वरवादी कर्मवादी च। अहं ब्रह्मवादी ज्ञानवादी च। ततो भवन्तं पराजित्य भवता मम ब्रह्मसूत्रादि-प्रस्थानत्रय-भाष्याणां वार्त्तिक-रचन-व्यवस्थापनमेव मया प्रथमं कर्तव्यम्।

**कुमारिलः।** किन्त्वार्य ! अधुना मम समयो नास्ति।

**शंकरः।** तत् कथम् ? सुदूर-देशाद् बहु-कायक्लेशेनाहम् अत्रागतः, एतदर्थमेव। अधुनाहं न प्रत्यवर्तिष्ये विफलमनोरथः।

**कुमारिलः।** देव ! किं न पश्यति भवान् यदहं चितारोहणोद्यतः ?

**शंकरः।** ( सोद्वेगम् ) शान्तं पापम् ! शान्तं पापम् ! किमिदम् अमङ्गलं भाषते भवान् ! किं संघटितम् ?

**कुमारिलः।** ममाधन्य-जीवनस्य पापद्वयं विनाशयितुम् इयं मम प्रचेष्टा।

**शंकरः।** पापद्वयम् ? तत् कथं देव! कुन्दधवलं भवतोऽनिन्द्य-जीवनमिति सर्वजनविदितम्।

**यथा विवस्वानुदयन् स्वभासा**
**सहान्धकारेण हिमं हिनस्ति।**
**ज्ञानं तथैवोदयदात्मवृत्त्या**
**सहैनसाऽज्ञानमपाकरोति ॥७८॥**
**यतो भवान् ज्ञानवतां वरिष्ठः**
**पुण्यात्मनामप्यसि तेन पुण्यः।**
**ज्ञानेन तेऽज्ञानचयो विनष्टः**
**पापेन तापेन सहैव साधो ॥७९॥**

**कुमारिलः।** नहि नहि, आर्य! इयं तव वहुमानप्रचोदिता वाणी। शृणोतु भवान्। अहं मीमांसक इति मीमांसादर्शनानुसारात् निरीश्वरवादी संवृत्त इति मे प्रथमं पापम्।

मम द्वितीयं पापं बौद्धगुरुवधः।

**शंकरः।** बौद्धगुरुवधः ? अश्रुतपूर्वमिदं सर्वम्।

**कुमारिलः।** कृपया श्रृण्वन्तु सर्वे तं शोकजनकं वृत्तान्तम्।

**( दृश्याभ्यन्तरदृश्यम् )**

[ कुमारिलस्य भूतपूर्वः गुरुवध-पापवृत्तान्तः ]

**स्थानम्**—नालन्दा-बौद्धविहारः।

**समयः**—प्रभातम्।

( ततः प्रविशन्ति धर्मपालः धर्मकीर्तिः कुमारिलश्छात्राश्च )

**धर्मपालः।** सावधानं श्रृणुत यूयम्—

भारतीय-सनातन-धर्मस्य मूलरूपो वेदः अप्रामाणिकः। "अनृत-व्याघात-पुनरुक्ति-दोषैर्दूषिततया नास्ति वेदस्य प्रामाण्यम्"—इति पूर्णसत्यम्।

**कुमारिलः।** अहो कष्टम्। अहो दौर्भाग्यम्! कथं वेदनिन्दां श्रुत्वापि प्राणान् धारयामि? किन्तु निरुपायोऽहम्। (रोदिति)।

**धर्मपालः।** कुतः क्रन्दनरवः? क एष क्रन्दति अत्र?

**धर्मकीर्तिः।** (निपुणं निरीक्ष्य) एष मम पितृव्यः कुमारिलभट्ट-महोदयः।

**धर्मपालः।** आश्चर्यम्! नैयायिकश्रेष्ठ धर्मकीर्तिमहोदय! मीमांसक-श्रेष्ठः कुमारिलभट्टः किम् अस्मिन् सुपवित्रे बौद्धविहारे करोति?

**धर्मकीर्तिः।** गुरुदेव! जानाति किल भवान् यत् अहं बौद्धधर्मावलम्वी। अयं मम पितृव्यमहोदयः मया सह वाग्युद्धे पराजितो भूत्वा पणानुसारेण भवत्सकाशाद् बौद्धशास्त्राध्ययनाय अत्रागतः।

**धर्मपालः।** अहो! कौतूहलोद्दीपको वृत्तान्तः। (कुमारिलम् उद्दिश्य) किन्तु भट्टमहोदय! कथं भवान् क्रन्दनपरः?

**कुमारिलः।** मिथ्या-वेदनिन्दाश्रवणात्। सर्वज्ञो वेद एव सकललोकज्ञान-कारणम्, ततो भगवान् बुद्धः सर्वज्ञश्चेत् तस्य सर्वज्ञत्वम् अपि वेदमूलकम्।

**धर्मपालः।** अरे रे दुष्ट! मत्समीपमेव भगवन्तं बुद्धं निन्दसि? ततस्तव जीवननाश एव कर्तव्यः।

> **धर्मः परो बौद्धमते ह्यहिंसा**
> **तथापि वध्यः खलु बौद्धनिन्दकः।**
> **पापात्मनां पापतमो यतः स**
> **तद्वस्य नाशे सुकृतं न पापम् ॥८०॥**
> **विषस्य वृक्षः सहसा जायते चेद् गृहाङ्गने।**
> **काममुत्पाटनीयः स न तु पाल्यः कथञ्च ॥८१॥**

(शिष्यानुद्दिश्य) इमं दुष्टजनम् अस्मादुच्चप्रासादान्निक्षिपत।

(शिष्यास्तथाकर्तुं कुमारिलमादाय निष्क्रान्ताः)।

(नेपथ्ये) आश्चर्यम् आश्चर्यम्। उच्चप्रासादशिखरात् निक्षिप्तोऽपि कुमारिलभट्टपादः न मृतः, विन्दुमात्रमपि आहतो वा। आश्चर्यम् आश्चर्यम्?

प्रासादतुङ्गशिखरादपि पातितोऽधो
नाप्याहतो न हि मृतो न च मूर्छितो वा।
मीमांसकः कृति-कुमारिलभट्टपादः
पुष्पास्तृतामधिशयान इवास्ति शय्याम् ॥८२॥

धर्मपालः। (आकुलः) ततस्तमत्रानय। सर्वानाह्वयत, तेन सहाहं तर्कयुद्धे प्रवृत्तो भवामि। असहनीया खल्वेतस्य अर्वाचीनस्य स्पर्धा।

(ततः प्रविशन्ति सशिष्यः कुमारिलभट्टः अन्ये च।)

धर्मपालः। कुमारिलभट्टमहोदय! मया सह तर्कयुद्धं करोतु भवान्। योऽस्मिन् तर्कयुद्धे पराजितो भविष्यति स तुषानले आत्मानं पातयिष्यति। इति एतस्य तर्कयुद्धस्य पणो भवतु। अपि भवदनुमोदितमिदम्?

कुमारिलः। सुनिश्चितम्।

धर्मपालः। ततः प्राथम्येन भवानेव प्रश्नं करोतु।

कुमारिलः। आर्य! बौद्धमते आत्मा अशाश्वतः क्षणस्थायी च। सर्वथा अग्रहणीयम् एतत्। व्यावहारिक-स्तरे ह्यात्मा स्थायी न चेत् जीवनयात्रा अचला भविष्यति। पारमार्थिक-स्तरेऽपि आत्मा क्षणस्थायी भवेच्चेत् भवदभिमतः कर्मवादो निष्फलो भविष्यति। यतः कर्मवादानुसारेण जीवः प्राक्तनस्याभुक्त-सकाम-कर्मणः फलानुसारेण पुनर्जन्म प्राप्नोति। तत्र आत्मा क्षणस्थायी भवेच्चेत् को वा कस्य कर्मफलानि भुङ्क्ते?

सर्वे। सत्यं सत्यम्।

कुमारिलः। वदतु भवान्, क्षणमात्रस्थायिना आत्मना किं वा वयं करिष्यामः? अपि भवान् क्षणस्थायी, प्रतिक्षणे एव परिवर्तनभागी? अपि अहञ्च तादृशः? ततः को वा धर्मपालः को वा कुमारिलः? केन सह कस्येदं वाग्युद्धम्। वाक्योच्चारणानन्तरमेव भवान् न धर्मपालः, अहमपि न कुमारिलः। ततः? (सर्वे हसन्ति)।

**सर्वे।** सत्यं सत्यम्! जयो वैदिक-धर्मधारक-वाहकस्याचार्य-पाद-श्रीकुमारिलभट्टस्य जयः। धर्मपाल-महोदय! अस्य प्रश्नस्य उत्तरं ददातु भवान्, उत्सुका वयम्।

**धर्मपालः।** (व्याकुलः) न जानामि किमद्य संघटितम्। अस्य प्रश्नस्योत्तरमवश्यम् एवास्ति, किन्तु न स्मरामि तत् साम्प्रतम्। हा हतोऽस्मि मन्दभाग्यः।

**कुमारिल-शिष्यः।** ततः पराजयं स्वीकरोतु भवान्। अस्माकं गुरुदेवस्य प्रश्नस्योत्तरं बौद्धशास्त्रे तिष्ठतु वा न वा, अस्मिन् वाग्युद्धे भवान् तदुत्तरं दातुमसमर्थः। ततो भवतः पराजयो निश्चितमेव जातः।

**धर्मपालः।** (नतशिराः) अहं पराजयं स्वीकरोमि। पुनश्च, अस्य तर्कयुद्धस्य पूर्वस्थिरीकृत-पणानुसारेण अहं तुषानले आत्मानं निक्षेप्स्याम्यचिरेण।

**कुमारिलः।** (सोद्वेगम्) न न, न भवान् आत्मानं विनाशयत्वकारणम्। भवान् ज्ञानिगुणिश्रेष्ठः जगतो महोपकारसाधकश्च। भवतः अकालमरणं कोऽपि न वाञ्छति। ततो विरमतु भवान्, विरमतु कृपया।

**पणो यः कृतोऽभूद् द्वयोरेकमत्या**
**छिन्नस्त्रेष सद्यस्तमानन्दितोऽहम्।**
**अकाले तवेच्छाकृतः प्राणहानि-**
**र्महानिष्टहेतुर्यतो मानवानाम् ॥८३॥**
**काममेषा पराभूतिर्जयिनाऽपि मतेष्यते।**
**तथाप्यस्माद्दात्मनाशाद्विरामो भवतः शुभः ॥८४॥**

**धर्मपालः।** न तत् सम्भवति। सत्यभङ्गरूपं महापापं मम जीवने मा भूत्। ततोऽहमवश्यमेव तुणानलं प्रविश्य मरणं वरिष्यामि।

**कुमारिलः।** हा हा हा! अहं ज्ञानिवधपापलिप्तः। अहो दुःखम्, अहो दौर्भाग्यम् अहो दुष्कृतं मम!

(दृश्याभ्यन्तर-दृश्यं समाप्तम्)

( पटपरिवर्तनम् )

**कुमारिलभट्टः।** ततोऽहं ज्ञानिवधरूप-भीषणपापलिप्तः। तदेवं पाप-द्वयस्य अपनोदनाय अहमपि स्वयं तुषानलं प्रविश्य मरणं वरिष्यामि। सर्वं प्रस्तुतम्।

**शंकरः।** (सोद्वेगम्), ज्ञानिवर ! कृपया शृणोतु भवान् मद्वचनम्। बौद्ध-गुरुवरस्य अकालमरणं न त्वत्कृतम्। तत् तस्य स्वकर्मफलमात्रम्। तत एवम्भूतं पापं भवन्तं न स्पृशति। पुनः, निरीश्वरवाद-स्वीकारमूलकं पापं ब्रह्मनामोच्चारणमात्रेण विनश्यति। ततो विरमतु भवान् विरमतु। मम ब्रह्मसूत्रादि-प्रस्थानत्रयभाष्याणां वार्त्तिकानि रचयित्वा मम चिरन्तन-मनोवासनां पूरयतु भवान् कृपया।

**कुमारिलः।** आर्य ! अपारा खलु भवतः करुणा। भवान् क्षणमात्र-पूर्वमपि आगमिष्यच्चेत् अहमपि मम सङ्कल्पम् अत्यक्ष्यम्। किन्तु साम्प्रतं सर्वं प्रस्तुतम, चितापि प्रज्वलिता ; ततो नान्यत् किञ्चिदपि सम्भवति। क्षमतां मां भवान्।

**शंकरः।** (सोद्वेगम्) मम कमण्डलुजलेनाहं चितां निर्वापयामि। विरमतु भवान् विरमतु कृपया।

मम स्वास्थ्यसम्पन्ममायुः सुदीर्घं
ममर्द्धिश्च सिद्धिस्तथा साधना मे।
तपस्या च पुण्यं तथा पूर्णता मे
ददे तुभ्यमद्याव्यलीकं हि सर्वम्॥८५॥
समासाद्य ततस्तेभ्यो दीर्घमायुर्निरामयम्।
ज्ञानराशिं त्वमात्मीयं शिष्येभ्यः प्रतिपादय॥८६॥

**कुमारिलः।** भवतः स्नेहोऽतुलनीयः। किन्तु यद्यहं प्रारब्धव्रतं त्यजेयम् तदा सुधीसमाजे निन्दाभाजनं भवेयम्। मज्जय एव भवतः शुभ-दिग्विजयस्य प्रथमो जयो निःसन्देहम्। पुनश्च मम शिष्यवरं मण्डनमिश्रं

भवान् जयतु। तस्य पराजयो ममैव पराजयः। स भवतो मनोवाञ्छां पूरयिष्यति।

देवदेव! ममान्तिम-समयः समुपस्थितः। देहेऽग्नितापमनुभवामि। ततो भवान् कृपया मां तारकब्रह्मनामानि श्रावयतु।

शंकरः। किमहं करिष्यामि? किं वा कर्तुं पारयामि? भवितव्यं भविष्यति। तत् शृणोतु भवान् तारकब्रह्मनाम।

तारक-ब्रह्म तारक-ब्रह्म तारक-ब्रह्म केवलम्।
ब्रह्म तथ्यं ब्रह्म सत्यं ब्रह्म नित्यं निर्मलम् ॥८७॥

[ इत्यष्टम-दृश्यम् ]

—०—

## नवम-दृश्यम्

[ शङ्करस्य दिग्विजये मण्डनमिश्रविजयः ]

स्थानम्—माहिष्मती-नगर्यां प्राज्ञश्रेष्ठमीमांसक-मण्डनमिश्रस्य गृहम्।

कालः—प्रभातम्।

(ततः प्रविशन्ति सशिष्यः शंकरः, सशिष्यो मण्डनमिश्रः उभयभारती च)

मण्डनमिश्रः। सर्वेषां मङ्गलं प्रार्थये।

उभयभारती। भवन्तः सर्वे परमज्ञानिनं सन्न्यासिवरं शुभंकरं श्रीशंकरम् अभिनन्दनं विज्ञापयन्तु।

सर्वे। सुस्वागतम् सुस्वागतम्!

मण्डनमिश्रः। देवि उभयभारति! सरस्वति! वीणापाणे! निगमागम-भरणि! अष्टादशो दिवसोऽयं श्रीशंकरनाम्ना सन्न्यासिवरेण सह मम वाग्युद्धस्य। त्वमसि वृता मध्यस्थारूपेणात्र। ततो ज्ञातुमिच्छामि—अस्मिन् वाग्युद्धे जयी कः? असौ अहं वा? जय-पराजयौ वर्वेते नाम। तद् ब्रूहि, कस्य भाग्योदयः कीदृशः?

**उभयभारती।** देव ! युवयोरत्र वागयुद्धे पूर्वमेव घोषिता मया जय-पराजय-निर्णयव्यवस्था, समारोपितञ्च तदनुसारं भवतोः कण्ठयोर्माल्यद्वयम्। भवतोः कण्ठशोभि परम-पुण्याधार-परमज्योतिरिदं माल्यद्वयमेव जय-पराजयौ सूचयिष्यति। पराजय-म्लानिमानमनुकुर्वदिव यदीयं पुष्पमाल्यं शुष्कं भवेत् तस्य पराजयो लोकसमाजे विज्ञप्तः स्यात्। इदमेव मम स्थिरं मतम्।

**शङ्करः।** देवि ! धन्योऽस्मि भवादृश्या महामहीयस्या मातुः सकाशात् पुष्पमाल्यग्रहणेन। एतादृशं धर्ममहामण्डलं प्रज्ञापरिवेषञ्च वीक्ष्य देवि ! कृतकृतार्थोऽस्मि। अहं दृढ़ं ब्रवीमि—

**कन्या यस्य त्वं स देशोऽस्ति धन्यो**
**धन्या सा भूः पालिका यत्र देवी।**
**भर्ता नूनं धन्य-धन्यः स विश्वे**
**यस्य ब्राह्मीसन्निभा त्वं गृहश्रीः ॥८८॥**

**मण्डनः।** (स्वगतम्) एष सुचतुरो जनः स्वकार्य-साधनार्थं मधु मधु भाषते।

(उभयभारतीमुद्दिश्य) देवि ! दिवसः प्राग्रेसरी भवति। तद् विचार आवयोः प्रारभताम्।

**उभयभारती।** निश्चितम्। ततोऽद्य शंकरमहाराजः प्राथम्येन प्रश्नकर्ता भवतु।

**शंकरः।** वाढ़म्। (मण्डनमिश्रमुद्दिश्य) पूज्यपाद मिश्रमहोदय ! आत्मतत्त्वविषये भवतो मतं प्रार्थये।

**मण्डनमिश्रः।** मन्मते आत्मा न ज्ञानस्वरूपः, केवलं ज्ञातैव। ततो ज्ञानम् आत्मनो न स्वरूपम् केवलं गुणमात्रम्। स गुणोऽपि न नित्यः, ततो मुक्त-जीवस्य ज्ञानं नास्ति।

**शंकरः।** अहो ! किमाश्चर्यमतः परम् ! एवं तर्हि मुक्तजीवो जड़-पदार्थविशेषः ?

**कश्चित्।** अहो सर्वमसमीचीनम्। बद्धजीवो ज्ञानवान् न तु मुक्तजीवः ! चित्तचमत्कारि तत्त्वमिदम्।

**शंकर-शिष्यः।** अये ! ब्रह्माण्डभेदी ज्ञान-शरः श्रीगुरुदेवस्य।

**मण्डन-शिष्यः।** (शंकरं निर्दिश्य) अनेन ज्ञानशरेण मुक्तम्मन्यो बद्धजीवः अयं पार्वतीप्रियकिङ्करः स्वयमेव विद्धः पतेत्।

**उभयभारती।** अहो ! महाप्राज्ञयोरनयोर्विचारे भवतां मतप्रकाशः औद्धत्यप्रकाशक एव। तदविलम्बं तूष्णींमासतां भवन्तः।

**मण्डनमिश्रः।** (स्वगतम्) अहो ! कथं मम पुष्पमाल्यं शुष्कमिव प्रतिभाति ? किमु मे पराजयो जातः ? सत्यं नु सर्वनाशो मे समुत्पन्नः ?

**मण्डन-शिष्यः।** कथं श्रीगुरुदेवो निष्प्रभ इव परिदृश्यते ? अर्वाचीनस्य एतस्य सकाशे गुरुदेवः पराजयं वृणुते—सत्यम् असहनीयमेतत्। तत् साम्प्रतं मल्लयुद्धमेव वरम्।

**उभयभारती।** शृणुत रे सन्तानाः ? उत्तेजनापरिपूरिता मा अकार्यं कुरुत। सम्माननीयोऽतिथिः, तदुपरि वाग्‌युद्धरतः, सहिष्णुतां विहाय नाकाण्डे बाहुबलं संवलं कुरुत। अपूर्वमेव अध्यात्मबलं तत् कुरुत संवलम्।

**शङ्कर-शिष्यः।** (उल्लसितः) जयोऽनिवार्यो महागुरु-शंकरस्य।

**उभयभारती।** मम पूज्यपादस्य पतिदेवस्य पुष्पमाल्यमधुना शुष्कं जातम्। ततः पूर्वस्थिरीकृत-नियमानुसारेण आपातदृष्ट्या स पराजितः इत्यपि सत्यम्।

तथापि सर्वे जानन्ति किल यत् सहधर्मिणी अर्धाङ्गिनी एव। तस्याः पराभवं विना कथं पतिः पराजयं वृणुयात् ? नाहं कथञ्चन विजितास्मि।

**मण्डन-शिष्यः।** जय उभयभारत्या जयः। जयो मातृशक्तेर्जयः।

**उभयभारती।** (शंकरमुद्दिश्य) यतिवर ! ततोऽहं भवता सार्धं वाग्‌युद्धप्रवृत्ता भवामि।

**शङ्करः।** अपि नारीजनेन सह सन्न्यासी कश्चन वाग्‌युद्धप्रवृत्तो भवेत् ? नाहं तत् कर्तुं समर्थः।

**उभयभारती।** किन्तु कथम् ? कथं सा अवहेलनभाजनम् ? किं न महर्षि-याज्ञवल्क्यो गार्ग्या वाचक्नव्या सह राजसभायां वाग्युद्धलिप्त आसीत् ? किञ्च,

स्त्रीपुंसभेदविषमा धिषणा कथं स्या-
दद्वैतवादिनि जने जितचित्तवृत्तौ ।
नारी स्वयं भगवतीति च भारतीया
प्रज्ञा ततोऽपि पुरुषान्न हि हीयते सा ॥८९॥

**शङ्करः।** सत्यम्। बुध्ये, अत्राहं भ्रान्तोऽस्मि। तद् भवती प्राथम्येन प्रश्नं करोतु।

**उभयभारती।** भवान् जीवनन्मुक्तिवादी। किन्तु, जड़-देहमनोवद्धस्य आत्मनः कथं मुक्तिः सम्भवेत् ?

**शंकरः।** भद्रे ! आत्मा कदापि न जड़-देहमनोवद्धः। देहात्मनोः सम्बन्धः अज्ञानमात्रप्रसूतः। आत्मैव ब्रह्म।

**उभयभारती।** ( स्वगतम् ) अस्य सन्न्यासिनः प्रसन्न-गम्भीरं वचनं सत्यमेव अनुध्येयम्।

**शंकरः।** देवि ! आत्मानं विलोकयतु भवती वारमेकम्। अपि भवती केवलो जड़देहः ? देह-सौन्दर्यमधुरिम्णि अवसानम् आयाते देहे भस्मीभूते सति आत्मसौन्दर्यं भवत्या निश्चितं स्थास्यति।

भूयश्चापि पश्यतु भवती—मनश्चापि भवती न, यतस्तत् जड़मणुपरिमाणञ्च। भवती स्वयं ब्रह्म तत एव चिन्मात्रं भूमस्वरूपा च। तत् कथं भवतीं क्षुद्र-देहमनःसनाथा संसार-पिञ्जरावद्धा राजेत ? धूलितलाद् बहूर्ध्वं विराजमाना भवती जीवनेऽस्मिन् कथं न मुक्तेरास्वादं लभेत ?

**मण्डनः।** ( स्वगतम् ) अहो ! परमप्रज्ञावती महामहिममयी साक्षाद्देवी वीणापाणिर्मम उभयभारती मालिन्यं भजते ! तस्या वदनं जातं मसीलिप्तम् ओष्ठयुगलञ्च शुष्कतामापन्नम्। अहो ! पराजयग्लानिस्तस्या ललाटे लिखिता खलु।

**शङ्करः।** ( सावेगम् ) भवन्तः सर्वे समस्वरं सानन्दं निर्भयं ब्रुवन्त—"सर्वं खल्विदं ब्रह्म", "अहं ब्रह्मास्मी"ति।

**सर्वे।** सर्वं खल्विदं ब्रह्म, अहं ब्रह्मास्मि।

**उभयभारती।** ( स्वगतम् ) अहो दुःखम्! अहमपि तरुण-तापसेन सत्यं नु पराजिता? किन्तु कथम्? भवतु, मया कौशलं किञ्चन अवलम्बनीयम्।

( शङ्करमुद्दिश्य ) यतिवर! अस्ति मम प्रश्नान्तरम्। तस्योत्तरञ्च भवतः प्रार्थये।

**शंकरः।** पृच्छतु भवती, उत्तरदानाय सर्वथा यतिष्ये।

**उभयभारती।** ततो ब्रवीतु भवान्—कामशास्त्रस्य मूलप्रतिपाद्यविषयः कः? इति।

**शङ्करः।** ( शङ्कितः ) धिक् धिक्! शान्तं पापम्। अहमाजन्म-सन्न्यासी। कामतत्त्वविषये किमपि नाहं जाने। तद्विषयकं किमपि ज्ञातुं न वाञ्छामि। अस्य श्रवणेन पापं चिन्तनेनापि पापम्।

**मण्डनः।** भद्रे! यथा तथा वा भवतु, प्रश्न एष भवत्या प्रत्याहरणीयः। यतस्तरुणोऽयं तापसश्चिरब्रह्मचारी। मन्ये, एतादृश-प्रश्नकरणम् असङ्गतमेव। विशेषेण सरस्वत्यां त्वयि नैतदुपयुज्यते।

**उभयभारती।** कथं प्रश्नोऽयं प्रत्याहरणीयः? पण्डितवर्ग! न मयि अविचारः करणीयः। नास्य तापसस्य असौकर्यसाधनाय तस्मै अवज्ञाप्रदर्शनाय वा प्रश्नोऽयं मया कृतः। सत्सु सर्वकामविषयेषु यः कामजयी स एव वास्तव-सन्न्यासी। अपि शङ्कराचार्यस्तादृशो नवा? अस्य वास्तव-मुनित्व-परिचायकोऽयं प्रश्नः।

**शंकरः।** मातः, कामतत्त्वविषये मम ज्ञानं किमपि न विद्यते। मासावधिः समयो मया एतदर्थं याच्यते। ततो भवती द्रक्ष्यति ध्रुवम्—शत-सहस्र-लेलायमानाग्निशिखाभ्योऽक्षत-शरीरोऽहं वहिरागमिष्यामि ध्रुवम्। मम देहो निष्कलङ्को राजिष्यते। शुभ्रत्वं मम, ममोज्ज्वलता कदापि न मलिना संजनिष्यते।

शुद्धं स्वर्णं दहननिहितं नीलतां नैव धत्ते
जात्यं हीरं खनिगतमपि प्रोज्झितं न स्वदीप्त्या।

**पारावारोदरगत-मणिः सर्वथाऽशीर्णकान्तिः**
**सर्वावस्थास्वपि न चलति स्वीयवृत्तान्महात्मा ॥९०॥**

**सर्वे।** जयः सच्चिदानन्दरूपस्य शङ्करस्य जयः। जयो महामहिममयस्य मण्डनमिश्रस्य जयः। जयो महामातुरुभयभारतीदेव्या जयः।

**उभयभारती।** भवतां साधना भवतु जययुक्ता।

**शंकरः।** धन्योऽस्मि। आर्ये! भवादृश्या महामहीयस्या महामातुर्वचःसन्निवेशेन हृदयं मम चिरसमुल्लसितम्, जगत् मह्यं नवीनतरं सुन्दरतरं जातं किल।

**[ इति नवम-दृश्यम् ]**

—:०:—

## दशम-दृश्यम्

[ शङ्करस्य दिग्विजये कापालिक-विजयः ]

**स्थानम्**—कृष्णा-तुङ्गभद्रा-सङ्गमस्थल-निकटवर्ति श्रीशैलतीर्थम्।

**समयः**—प्रभातम्।

( ततः प्रविशतः कापालिकराजः क्रकचः कापालिकप्रधान उग्रभैरवश्च मद्यमानोन्मत्तौ )

**क्रकचः।** हाः हाः हाः! कापालिकवर उग्रभैरव! किं कथयसि त्वम्? शङ्करनामको महापण्डितः दिवसमात्रेण त्वया विजितः? हाः हाः हाः! किं स पण्डितः, अथवा दुग्धपायि बालकमात्रम्? हाः हाः हाः! ततः कथय मां तव विजयप्रणालीम्। उत्सुकः खल्वहम्।

**उग्रभैरवः।** कापालिकराज! स वयसा नवीनोऽपि कूटकौशलेनातिप्रवीणः। अधिकन्तु तस्य शिष्याः परम-गुरुभक्तिपरायणाः सतत-गुरुरक्षकाश्च। एतेषां शिष्याणां मध्ये पुनर्भीषणतमः, कठोरतमो दुर्धर्षतमश्च पद्मपाद-सनन्दनः, शङ्करस्य प्रथमो मन्त्रशिष्यः स मयि प्रथमदिवसादेव सर्वदा सन्देग्धि।

तथापि को मां कूटकौशलेन पराजेतुं समर्थः ? हाः हाः हाः ! राजाधिराज ! भवत आशीर्वलेन सर्वं सिद्धम् । शृणोतु भवान् कृपया मम विजयवृत्तान्तम् ।

( दृश्याभ्यन्तर-दृश्यम् )

[ पटपरिवर्तनम् ]

स्थानम्—शङ्कराचार्यस्याश्रमपदम् ।

समयः—प्रभातम् ।

( ततः प्रविशति सशिष्यः शङ्करः )

शङ्करः । क्रन्दनशब्दं शृणोमि । वत्स पद्मपाद-सनन्दन ! गच्छ, क्रन्दनशीलं जनं सयत्नम् अत्रानय ।

( सनन्दनः वहिर्गत्य उग्रभैरवेण सह प्रत्यावृत्तः )

उग्रभैरवः । ( शंकरस्य पादयुगलं धृत्वा भूम्यां लुठितः, उच्चैः क्रन्दनपरश्च )

पतितपावन ! दीनतारण ! करुणालय ? त्रायस्व मां त्रायस्व माम् अधमाधमम् । महापातकी अहं कापालिकधर्मचरः । शतसहस्राणि पापानि मया कृतानि । किमहं न मोक्षाधिकारी ?

( उच्चैः क्रन्दति )

शङ्करः । ( तमालिङ्ग्य ) वत्स ! मा शोचीः, मा शोचीः । अनुताप एव सकलपापनाशकः । सर्वे वद्धजीवाः स्वस्वप्रचेष्टया मोक्षमर्हन्ति । अत एव वत्स ! न नैराश्यं भज ।

यथा पयः पावकमुच्छिनत्ति रविस्तमिस्राण्यनलश्च धूलीः ।
तथानुतापोऽपि हि कामनाग्निं मोहान्धकारानघ-धूलिराशीन् ॥९१॥

उग्रभैरवः । देवदेव ! अहं भवतो दासानुदासः । अहमधमाधमः दीनातिदीनो हीनातिहीनः कीटानुकीटो नरककृमितुल्यश्च । तथाप्यहं भवतः

शिष्यरूपेण अस्मिन् पुण्याश्रमे स्थातुम् इच्छामि। कृपया मम मनोवासनां पूरयतु आर्यः।

**सनन्दनः।** आचार्यवर ! "अज्ञात-कुलशीलस्य वासो देयो न कर्हिचित्" इति प्राज्ञनिर्देशः। ततः, एष भीषणदर्शनो दुश्चरित्रः कापालिको विताड़नीय एव।

**शङ्करः।** वत्स ! ईदृश-परुष-वाक्योच्चारणं त्वयि न शोभते। भगवद्-भक्तानां कुलं शीलञ्च न स्तः। ते भगवत्कृपाप्रार्थिनो मोक्षकामिनश्च—इत्येतावानेव तेषाम् एकमात्रः परिचयः। परन्तु दुश्चरित्रा जना एव विशेषेणोद्धारणीयाः।

ततः कापालिकवर ! त्वम् अत्रैव मम प्रियशिष्यरूपेण तिष्ठ सानन्दम् अद्यप्रभृति।

**उग्रभैरवः।** कृतकृतार्थोऽस्मि गुरुदेव !

**( दृश्याभ्यन्तर-दृश्यं समाप्तम् )**

## [ पटपरिवर्तनम् ]

**उग्रभैरवः।** हाः हाः हाः ? अधुनाऽहं शंकराचार्यस्य प्रियतमः शिष्यः। प्रत्यहं स माम् अद्वैततत्त्वमुपदिशति। हाः हाः हाः।

**क्रकचः।** हाः हाः हाः ! ब्रह्म ! फुः फुः ! किम् इदं ब्रह्म ? ब्रह्म न पुरुषः, नापि नारी, ब्रह्म न रूप-गुण-शक्तिमत्—ततस्तत् शून्यमेव। तेन सहाभिन्नता हि मुक्तिः। हाः हाः हाः ! उग्रभैरव ! किं त्वम् ईदृशं शून्यत्वं वाञ्छसि ?

**उग्रभैरवः।** नाहं मुण्डितमस्तको रिक्तपदः कौपीनधारी भण्डतपस्विवन्निर्वोधो निर्वीर्यो वा। नाहं वाञ्छामि वैराग्य-ब्रह्मचर्य-विमण्डितं शून्यत्वम्। अहं पुरुषसिंहः, मम भोगार्थं प्रयोजनं सर्वेषां विलास-द्रव्याणाम्, प्रयोजनं पुनः "पञ्चमकार" विलसितस्य परिपूर्णेन्द्रिय-प्रमोदस्य—स एव हि मम मोक्षः।

महाराज ! एष एव मम जीवनमन्त्रः—

मद्यं पिवाकण्ठं सदा
मांसेन प्रपूरयोदरम् ।
मत्स्यान् मारय निरङ्कुशं
मैथुनमाश्रय निरन्तरम् ॥९२॥
मुद्रा आहर निःशङ्कं
लोप्त्रेण पूरय च कक्षम् ।
भवतु "पञ्चमकार" सेवा
तव निर्मल-जीवनलक्ष्यम ॥९३॥

क्रकचः । होः होः होः ! साधु साधु साधु ! सखे ! अतुलनीयस्त्वम् । किन्तु प्राणाधिक ! कापालिक-तन्त्रमन्त्रविनाशिनस्तस्य कपटसाधुवरस्य मारणमेव ममाभीप्सितम्, तद्विषये का व्यवस्था त्वया कृता ?

उग्रभैरवः । सुष्ठु-व्यवस्था मया कृता ( कर्णे कथयति ) ।

क्रकचः । हो हो हो, हाः हाः हाः ! असीम-कूटकौशली त्वम् । तव कार्यसिद्धिर्भवेत् चेत् अहं त्वां प्रधानमन्त्रिपदे नियोक्ष्ये । ईदृशः कूट-कौशलबुद्धिर्हि प्रधानमन्त्रिणां प्रधान-गुणानां प्रथमो गुणः ।

( निरीक्ष्य ) अहो ! इत एवायाति तव पूज्य-गुरुदेवः सशिष्यः साधुश्रेष्ठः शङ्करः । ( सोपहासम् ) गच्छ गच्छ, तस्य श्रीचरणारविन्द-मकरन्दं पिव पिव तृषित-भ्रमरवदाकण्ठम्, लीढ़ि लीढ़ि तस्य श्रीपादपङ्करजःकणिकां क्षुधित-कुक्कुरवत् निरन्तरम्, जिघ्र जिघ्र तस्य श्रीपदाम्बुजरजःपरिमलं मत्तकस्तूरीमृगवत् सानन्दम् । गच्छ, गच्छ प्राणाधिक ! ब्रह्म त्वद्विरहेण क्रन्दति अविरतं दिग्विदिग्भेदिशब्दैः । हाः हाः हाः ! ( प्रस्थितः ) ।

( ततः प्रविशति सशिष्यः शङ्करः )

उग्रभैरवः । ( भूमौ पतित्वा शङ्करस्य चरणयुगलं मस्तके निधाय रोदिति ) ।

शंकरः । ( व्याकुलः ) वत्स वत्स ! उत्तिष्ठ उत्तिष्ठ, किं संघटितम् ?

**उग्रभैरवः।** महापापी अहम्, न तत् सर्वसमक्षं कथयितुं पारयामि।

**शंकरः।** ( शिष्यानुद्दिश्य ) वत्साः ! यूयं स्व-स्व-कार्याणि कुरुत।

( शिष्याः प्रस्थिताः )

**शङ्करः।** वत्स ! कथय मां तव मनोऽन्यथाकारणम्।

**उग्रभैरवः।** प्रभो ! भवान् जगतो हितार्थं शङ्कररूपेण मङ्गलकररूपेण, भूतले अवतीर्णः। भवतो गुणराशिः वारिधिवत् अनन्तः असीमः अतलश्च। विशेषेण भवान् पतितपावनो दीनतारणः करुणाघनश्च। तत एव भवतः श्रीपादपद्मे ममैका प्रार्थना।

**शंकरः।** स्वच्छन्दं ब्रूहि, प्राणाधिक ! मा लज्जस्व। अहं तव मनोवाञ्छामवश्यमेव पूरयिष्यामि।

**उग्रभैरवः।** श्रीगुरुदेव ! देवदेव-महादेवेन सह शिवलोके स्थितिरेव मम अधन्य-जीवनस्य एकमात्रैषणा। एतदर्थं मया आजीवनं कठोरा तपस्या कृता। ततः कृपापरवशः शिवः मह्यम् ईदृशं वरं दत्तवान्—यदि त्वं कस्यचिद् राज्ञः सर्वज्ञस्य वा मस्तकेन रुद्रहोमं सम्पादयितुं शक्नुयास्तदा ते मनोवासना पूर्णा भवेदिति।

**शंकरः।** अत्याश्चर्यमिदं सर्वम् ! कथं परम-करुणामयः शिवः ईदृश-कठोर-निष्ठुर-नियमपालनार्थं त्वामादिष्टवान् ?

**उग्रभैरवः।** न जाने देव ! केवलं जाने स आशुतोषः शिवः सकल-नियमातीतः, केवलं जाने भवान् मम एक एव विपत्त्राता, मम एक एव सहायकः, मम एक एव प्राणरक्षकः ! देवदेव ! न मम दोषान् गणयतु भवान्। देवदेव—

**शंकरः।** तात ! किं त्वं वक्तुमिच्छसि ? निर्भयं ब्रूहि ?

**उग्रभैरवः।** देवदेव ! मम जीवन-व्यापिनी साधना नाद्यापि सफली-भूता। यतः, यो राजा स न दीनदयालुः यो दीनदयालुः स न राजा। पुनरपि यः सर्वज्ञः स न करुणामयः, यः करुणामयः स न सर्वज्ञः। ततः को दास्यति मस्तकं मदर्थं करुणया।

**शंकरः।** सत्यम्। किन्तु को वा उपायः?

**उग्रभैरवः।** अस्ति उपाय एकः। भगवन्! कण्ठो मम रुद्धो भावावेगेन अश्रुप्रवाहेण च। तथापि ब्रवीमि निरुपायोऽहम्। भवानेव जगति एकमात्रो दयाशील-सर्वज्ञः। ततो मदर्थं भवान् मस्तकं ददातु सानुग्रहम्। मम शिवलोकप्राप्तिरेकान्ततो भवत्कृपापेक्षिणी।

**शंकरः।** तात! मा व्याकुलो भव। तव मोक्षार्थमहं सानन्दं मस्तकं दास्यामि। किन्तु किमयं वस्तुत एव मोक्षलाभोपायः? अद्वैततत्त्वानुसारेण तु ब्रह्मज्ञानमेव तदुपायः।

**उग्रभैरवः।** भवान् मां न विश्वसिति? ततो मरणमेव मम वरम्। आर्य! आवयोः पन्थानौ न समानौ। भगवता शिवेनैव अयं मस्तक-वलिदानरूपः पन्था मदर्थं निर्दिष्टः सानुग्रहम्।

**शंकरः।** मम शिष्येषु अस्ति मे परिपूर्णो विश्वासः। वत्स! ततो रुद्रहोमस्य सर्व-व्यवस्थां कुरु अविलम्बम्। तव मोक्षार्थमहं सानन्दं शिरो दास्यामि। मानवजीवनं परसेवार्थम्।

**वालाग्रशतभागस्य जीवः शततमोंशकः।**
**अलीको मृगतृष्णेव क्षणिको बुद्बुदो यथा ॥६४॥**
**तथापि स महान् भूमा सत्यः शाश्वत एव च।**
**विश्वमैत्री-समाख्येन स्यादुपायेन केवलम् ॥६५॥ (युग्मकम्)**

**उग्रभैरवः।** परमा खलु भवतः करुणा! परेद्युः अमानिशा-मध्यरात्रे निकटस्थं भैरवस्थानम् आगच्छतु भवान् कृपया।

**शंकरः।** वाढम्। किन्तु मम शिष्या जानन्ति चेत् सर्वं विफलं भविष्यति।

**उग्रभैरवः।** तद्विषये मया सम्यग् व्यवस्था कृता। न कोऽपि ज्ञास्यति। भवतः पदरजो मस्तके गृहीत्वाहं धन्यातिधन्योऽस्मि।

## [ पटपरिबर्तनम् ]

**स्थानम्**—भैरवपीठः।

**समयः**—मध्यरात्रः।

( ततः प्रविशन्ति क्रकचः उग्रभैरवः कापालिकाश्च )

**क्रकचः।** हाः हाः हाः! पतङ्गो जालवद्धः। वन्धवः! हस्तिना सह पतङ्गस्य संग्रामे को विजयी भवेत्! पतङ्गः? हाः हाः हाः? कलियुगेऽपि न तत् सम्भवति, परन्तु हस्तिपदेन पतङ्गः पिष्टो भवति। तदेव संघटितम्। हाः हाः हाः!

वन्धवः! मद्यपानं कुरुत, "पञ्चमकार" साधनमवलम्वध्वम् निर्भयम्। अद्य पतङ्ग-पेषण-महोत्सवः। होः होः होः!

**कापालिकाः।** जयः पतङ्ग-पेषक-हस्तिमहाराजस्य जयः।

**क्रकचः।** अपि सर्वं सुसज्जितम्? शाणित-खड्गः, रुधिरपात्रम्, अग्निकुण्डम्, कारणवारि—सर्वाणि प्रस्तुतानि?

**कापालिकाः।** वाढ़म्।

**क्रकचः।** अये! इत एव आयाति असमसाहसः श्रील-श्रीयुक्तः पतङ्ग-महोदयः। ततो हास्य-लास्यानि विहाय सन्न्यासिजनयोग्यं स्थिरगम्भीर-भावम् अवलम्वध्वम्।

( ततः प्रविशतः शङ्कर उग्रभैरवश्च )

**शङ्करः।** ( स्वगतम् )।

त्यजाम्यद्यात्मानं परहितविधौ वद्धमिह मे
मनो व्रह्मानन्दाप्लुतमभवदेतन्मम ततः।
परव्र*ह्मै*कत्वं तदहमुपलप्स्येऽभिलषितं
घटे भग्नेऽभेदोऽनुपहित-नभः-कुम्भनभसोः ॥९६॥

शिष्याः सर्वे गभीर-निद्रामग्ना अस्याम् अमानिशायाम, अत एवाहं निर्विघ्नम् आगन्तुं समर्थः। (प्रकाशम्) वत्स ! किं मया करणीयमत्र ?

उग्रभैरवः। भवान् कृपया बलिकाष्ठे मस्तकं निदधातु। ततः परं यथाकर्तव्यम् अहमेव करिष्यामि।

शङ्करः। क्षणं तिष्ठ, अहं समाधियोगमवलम्बे।

"ब्रह्मैवेदममृतं पुरस्ताद्
ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं प्रसृतं
ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥९७॥" (समाधिमग्नः)

क्रकचः। उग्रभैरव ! न विलम्बनं कुरु। बन्धवः ! प्रारभध्वं मद्य-पानोन्मत्ता बलिदान-कृत्यम्। (सर्वे तथा कुर्वन्ति)

उग्रभैरवः। (मारणमन्त्रमुच्चारयन् खड्गमुत्तोलयति)

(अकस्माद् वेगेन प्रविशन्ति खड्गहस्तः सनन्दनः शिष्याश्च)

सनन्दनः। रे रे पाषण्ड ! रे रे भण्डतपस्विन् ! कृतकर्मणः फलं भुङ्क्ष्व। (उग्रभैरवस्य खड्गं बलेन गृहीत्वा तस्य शिरश्छेदं करोति)

सर्वे। जयः श्रीगुरुदेवस्य जयः।

शङ्करः। (समाधिस्तरादवरुह्य) वत्साः ! किं संघटितम् ? ईदृशे निर्जने स्थाने गभीर-निशाकाले कथं यूयं समागताः ?

सनन्दनः। गुरुदेव ! एतन्मम स्वप्नस्य फलम्।

शङ्करः। स्वप्नः ? कथय सर्वं वृत्तान्तम्।

सनन्दनः। वृत्तान्तः सामान्य एव। अकस्मान्मया स्वप्ने दृष्टं यत् कश्चित् कापालिको भवतः शिरश्छेदनोद्यतः।

ततोऽहं प्राणपणं कृत्वा अत्रागतो धावनपरः। असीमा खलु भगवतः कृपा यदहं यथासमयम् अत्रागन्तुं समर्थः। गुरुदेव ! एते सर्वे भण्डसाधवः। उग्रभैरवोऽपि तादृक्।

**शङ्करः।** प्राणाधिक ! त्वमेव मे जीवनरक्षकः। पुत्र ! आशीर्वादान् गृहाण। सौम्य ! अतुलनीयो हि त्वम्।

**सनन्दनः।** नहि नहि देव ! भवतः परार्थं जीवन-दानमपि मानवेतिहासे स्वर्णाक्षरेण लिखितं राजिष्यति सुनिश्चितम्।

**क्रकचः।** ( नतजानुः ) क्षमतां मां भवान्। मयैव उग्रभैरवो नियुक्तो भवद्वधार्थम्। किन्तु ब्रह्मज्ञः अमरः। जगति कोऽपि तं हन्तुं न शक्नोति। ब्रह्मस्वरूप गुरुदेव ! कृपया देहि मह्यं तस्यामृतस्य कणिकाम्। अनुतप्तोऽहम्।

**शंकरः।** केवलां कणिकां कथम्? पृथिव्याः सर्वत्राहोरात्रम् अकृपणा अमृतवृष्टिर्वर्तते। बद्धाञ्जलिस्तदमृतमेव पिब यथेच्छमाकण्ठम्। "त्यागेनैके अमृतत्वमानशुः", त्यागेन प्रकृतानन्दो न भोगेन कदाचन। न विस्मर एतत्, न विस्मर।

भूभृद्-भूरजसोः पयोधि-पृषतोराकाश-पातालयोः
द्रुमारुट्-शष्पकयोर्भिदा भवति या सा त्याग-सम्भोगयोः।
त्यागः शाश्वत-पूर्णतां जनयति प्रज्ञाप्रसादं सुखं
सम्भोगः सुतरामशान्तिमसुखं सङ्कीर्णतां शून्यताम् ॥९८॥

**क्रकचः।** न विस्मरिष्यामि, कदापि न।

[ इति दशम-दृश्यम् ]

—०—

## एकादश-दृश्यम्

[ शंकरस्य दिग्विजये शारदापीठविजयः ]

**स्थानम्**—काश्मीरस्थ-शारदापीठः।

**समयः**—प्रभातम्।

( ततः प्रविशन्ति पण्डिता मन्दिरपुरोहितश्च )

**साङ्ख्यवादी।** किम्, किं श्रुतं मया? सुदूर-देशात् शङ्कर-नामधारी

कश्चिन्नवीन-पण्डितः स्व-दल-वलेन सह पवित्रतमं तीर्थस्थलं शारदापीठं समुपागतः ? किं सोऽभिलषत्यत्र ?

**योगवादी।** न जानाति भवान् यत् स दिग्विजयाभिलाषी ?

**नैयायिकः।** दिग्विजयात् पूर्वम् अस्माकं विजयस्तेन करणीयः। स दिग्विजयं कर्तुं शक्नोति न वेति न जाने, किन्तु अस्मद्-विजयस्तादृश-दिग्विजयकामिपण्डितस्यात्यसम्भवः।

**वैशेषिकः।** अपि पतङ्गोऽपि गरुड़ः, तृणपुष्पमपि पारिजातम्, शिशिर-कणोऽपि सागरः ?

**मीमांसकः।** श्रुतं मया यत् स वयसा अतितरुणः, तथापि तस्य स्पर्धा गगनस्पर्शिनी। कथं स सर्वदेशीय-ज्ञानि-गुणिधुरन्धरैः सह तर्कयुद्धे प्रवर्तितुं साहसी संवृत्तः ? ततः सोऽवश्यमेव यथोचितं शिक्षणीयः।

**जैनः।** कुत्र सः ? तस्य दर्शनोत्सुका वयम्। दिग्विजयः ? फुः फुः फुः !

**बौद्धः।** आहूय आहूय तम्। मुहूर्तेन तस्य दाम्भिकतां पददलिताम् औद्धत्यञ्च चूर्ण-विचूर्णं करिष्यामि इति ध्रुवम्।

अहो इत एवायाति भुवनपाता आचार्यः श्रीलश्रीयुक्त-शङ्कराचार्य-महोदयः। सर्वे सावधाना भवन्तु।

( प्रविशति सशिष्यः शङ्करः )

**शङ्करः।** प्रणमामो वयं वः सर्वान्। अहं शङ्करनामा सुदूर-केरल-देशादत्रागतो वहु-कायक्लेशेन। अहो पवित्रतमं स्थानमिदम् ! इदं सुप्रसिद्धं शारदादेवीमन्दिरमहं प्रवेष्टुं वाञ्छामि, मन्दिरान्तर्गतं सर्वज्ञपीठञ्च द्रष्टुं कामये।

**मन्दिर-पुरोहितः।** किन्तु, न जानाति किल भवान् मन्दिरस्यास्य नियमान्। प्रथमतः सातिशयं पवित्रमिदं सर्वज्ञपीठम्—भारतवर्षीय-सकल-सम्प्रदायान्तर्गत-पण्डितश्रेष्ठैर्निरन्तरं रक्षितम्। किं न पश्यति भवान् एतान् पण्डितवरान् मन्दिरं सर्वतो वेष्टयित्वा निर्भीक-प्रहरिवद्

विराजमानान् ? एते हि मन्दिरस्य पवित्रतां सर्वज्ञ-पीठस्य च मर्यादां रक्षिष्यन्ति जीवनपणैः सततम् ।

**शङ्करः ।** बुध्ये । ततस्ततः ?

**मन्दिर-पुरोहितः ।** ततः सर्वज्ञ-पीठारोहणकामिना जनेन इमे पण्डिताः प्राथम्येन पराजेतव्याः । अन्यथा ते एतन्मन्दिरप्रवेशमपि नानुमंस्यन्ते ।

**शङ्करः ।** सत्यम् ? आश्चर्यः खल्वेष नियमः । सत्यमेतत्, सर्वज्ञपीठसदृशं पवित्रतमं स्थानम् आरोढुं न सर्वे अधिकारिणः किन्तु पीठदर्शन-मन्दिर-प्रवेशावपि भवद्भिः कथं निषिद्धौ ? भगवद्दर्शने भगवत्स्थानप्रवेशे च सर्वेषामस्ति समानोऽधिकारः ।

नदीजलं सूरकरः समीर
एकस्य कस्यापि यथा न सम्पत् ।
तथा महान् सर्वग एष देवो
वैयक्तिकः स्यात् कथमेकदृश्यः ॥९९॥

स सर्वकालेऽपि च सर्वदेशे
समर्चनीयो ह्यभिवन्दनीयः ।
शुद्धान्तगाया इव राजवध्वाः
श्रीमूर्तिरस्यास्तु कथं ह्यदृश्या ॥१००॥

**मन्दिर-पुरोहितः ।** ( सरोषम् ) भोः पण्डितप्रकाण्ड ! मा मां तत्त्वकथां श्रावयतु नाम भवान् । अस्माकं नियमा न व्यतिक्रमणीयाः । गर्वोद्धतवाक्यानि संवृणोतु भवान् ।

**शङ्करः ।** देव ! क्षमां याचे । गर्वस्य का कथा ? नित्यशिक्षार्थी नित्यजिज्ञासुरहम् ।

**पुरोहितः ।** ( सन्तुष्टः ) प्रसन्नोऽस्मि । शृणोतु भवान् । एषोऽस्माकं द्वितीयो नियमः—अस्माकं पण्डितैः सह विचारे विजयिनमपि यदि माता

शारदा देववाण्या 'अयं सर्वज्ञ' इति न घोषयेत् तर्ह्यपि स शारदापीठाधिरोहणाधिकारं नार्जयेत्।

**शंकरः** । हा मन्दभाग्योऽहम्! देवी शारदा 'सर्वज्ञ'रूपेण मां घोषयिष्यतीत्यत्र नास्ति ममाशा स्पर्धा वा। ततः किं करिष्यामि? किमहं व्यर्थमनोरथः सद्य एव प्रत्यावर्तिष्ये?

**सनन्दनः** । (जनान्तिकम्) नहि नहि गुरुदेव! तत् कदापि न वाञ्छनीयम्। दिग्विजयी पण्डितप्रवरो भवान्। अस्मात् पण्डित-पूर्णात् स्थानात् प्रत्यावर्तेत चेत् भवतोऽमलं नाम दुरपनेयकलङ्कलिप्तं भवेत्। ततो भवान् पण्डितवरैः सह वाग्युद्धं प्रारभतां कृपया। सर्वज्ञा शारदा देवी भवन्तं "सर्वज्ञ"रूपेण घोषयतु वा न वा, भवता अवश्यमेव इमे पाण्डित्याभिमानिनो जना विजेतव्याः।

**शंकरः** । (जनान्तिकम्) एवमस्तु। (प्रकाशम्) पण्डितप्रवराः! प्रणमामि वः। इच्छाम्यहं यं कमपि विषयमवलम्ब्य भवद्भिः सह वाक्यालापं कर्तुम्। अहं नित्यजिज्ञासुः, ततः किमहं भवतः प्रथमं प्रक्ष्यामि?

**नैयायिकः** । (जनान्तिकम् अन्यान् उद्दिश्य) अहो विनयबाहुल्यम्! अहो कूटकौशलमस्य! प्रश्नच्छलेनायम् अस्मासु दोषमारोप्य स्वपाण्डित्यं प्रकटयितुं वाञ्छति।

**मीमांसकः** । ततः स एव प्रष्टव्यः।

**सांख्यवादी** । (उच्चैः) पण्डितप्रवर! भवानेव अस्माभिः परीक्षणीयः न वयं भवता। ततो भवानेव अस्माभिः प्रष्टव्यः।

**शङ्करः** । यदाज्ञापयन्ति भवन्तः।

**पुरोहितः** । (विहस्य) भवान् सप्तरथिपरिवेष्टितः, साङ्ख्य-योग-न्याय-वैशेषिक-मीमांसक-जैन-बौद्धपण्डितैर्युगपदाक्रान्तः साम्प्रतम्। प्राणरक्षणे अवहितो भवतु भवान्। (सर्वे हसन्ति)। ततः प्रतिजनम् एकैकः प्रश्नः करणीयः, एक एव तीक्ष्णशरः प्राणान् नाशयितुं पूर्णसमर्थः। (सर्वे हसन्ति)

किन्तु कोऽत्र मध्यस्थो भविष्यति? न पश्यामि तादृशं कमपि योग्य-

जनम्। भवतु। क्षणम् अपेक्षन्तां भवन्तः। ( वहिर्गत्य पुष्पेणैकेन सह पुनः प्रविश्य ) देवीचरणोपहारीकृतमिदं सप्तदलं पुष्पमतिशयपवित्रम्। इदं भवतां मध्यस्थले स्थापयामि। अस्य सप्त दलानि सप्तरथ्यभिमुखानि विराजन्ते। सप्तानां रथिनां मध्ये यदि कस्यचन पराजयो भवेत् तदा तदभिमुखं दलं तत्क्षणादेव शुष्कं भविष्यति। ततः प्रारभन्तां भवन्तः कृपया वाग्युद्धम्।

**सर्वे।** तथास्तु।

**साङ्ख्यवादी।** अहं साङ्ख्यमतावलम्वी, प्रकृति-पुरुषवादी पुरुषवहुत्ववादी च। प्रकृतिर्जड़स्वभावा, पुरुषश्चित्स्वरूपः। द्वयोः संयोगेन सृष्टिर्वियोगेन च मुक्तिः। उभौ जगति सर्वम्। ब्रह्मैकत्ववादिनो भवतः किमत्रोत्तरम्?

**शङ्करः।** ( सस्मितम् ) "सः"।

**साङ्ख्यवादी।** ( आश्चर्यान्वितः ) सः? कोऽस्य अर्थः?

**शंकरः।** भवान् साङ्ख्यमतावलम्वी। भवदधीतस्य दर्शनस्य आद्याक्षरं कृपया स्मरतु भवान्।

**साङ्ख्यवादी।** ( पूर्ववदाश्चर्यान्वितः ) ततः किम्?

**शङ्करः।** एतदेव—सः सः सः—स हि केवलः, आत्मा हि केवलः ब्रह्म हि केवलम्। पुरुषोऽपि सः, प्रकृतिरपि सः, सर्वमपि सः, "सर्वं खल्विदं ब्रह्म" प्रकृति-पुरुषसंयोगः साङ्ख्यदर्शनस्य मूलभित्तिः। किन्तु कथमीदृशः संयोगः? जड़ा प्रकृतिर्न धावति पुरुषं प्रति, निष्क्रियः पुरुषोऽपि न धावति प्रकृतिं प्रति, तत् कथम् ईदृशः संयोगः संघटते? असमीचीनमेतत् सर्वम्।

**पुरोहितः।** अहो अहो! शुष्कमस्य पुष्पस्य साङ्ख्याभिमुखं दलम्।

**साङ्ख्यवादी।** हा हतोऽस्मि मन्दभाग्यः।

**योगवादी।** अहं योगमतावलम्वी। "योगश्चित्तवृत्तिनिरोधः"। ततो योगेन पुरुषस्वरूपोपलब्धिर्भवति। किम् अत्र ते वक्तव्यम्?

**शंकरः।** ( सस्मितम् ) यः।

**योगमतावलम्वी।** ( आश्चर्यान्वितः ) "यः"? कोऽस्यार्थः?

**शंकरः।** भवान् योगमतावलम्वी तन्मतस्याद्याक्षरं कृपया स्मरतु भवान्।

**योगमतावलम्वी।** (पूर्ववदाश्चर्यान्वितः) ततः किम्?

**शंकरः।** एतदेव—यः, यः, यः—यो हि पुरुषः स हि ब्रह्म; य ईश्वरः स हि ब्रह्म; या च ईश्वरोपलब्धिः सैव हि ब्रह्मस्वरूपोपलब्धिः।

**पुरोहितः।** अहो अहो! शुष्कमस्य पुष्पस्य यौगाभिमुखं दलम्।

**योगमतावलम्वी।** हा हतोऽस्मि मन्दभाग्यः।

**नैयायिकः।** अहं न्यायमतावलम्वी—ईश्वरवादी बहुत्ववादी च। अत्र भवतो वक्तव्यं शुश्रूषे। परं ममावलम्वितस्य मतवादस्याद्याक्षरमाश्रित्य न मां मोहयितुं यततां भवान्।

**शङ्करः।** आर्य! मोहस्य का कथा? सत्यतमं तत्त्वमिदम्। ततः पुनरपि वदामि "न" इति।

**नैयायिकः।** एवं तर्हि क्रियताम् अस्य व्याख्यानम् अपि।

**शङ्करः।** एतदेव—न, न, न—ईश्वरो न जीवो न, जगन्न—केवलं ब्रह्मैव। ईश्वरः केवलं व्यावहारिक-स्तरगतः, ब्रह्मैव पारमार्थिकम्। परन्तु भवत ईश्वरवाद आद्योपान्तं स्वविरोधदोषदुष्टः। न्यायमतानुसारेण ईश्वरो जगतः केवलं निमित्तकारणरूपः। न तु उपादानकारणरूपोऽपि। किन्तु सर्वव्यापिन ईश्वराद् वहिः कुत्र वा उपादानं तिष्ठति? ततः सर्वथा असमीचीनमेतत्।

**पुरोहितः।** अहो अहो शुष्कमस्य पुष्पस्य नैयायिकदिग्वर्तिदलम्।

**नैयायिकः।** हा हतोऽस्मि मन्दभाग्यः।

**वैशेषिकः।** अहं वैशेषिकमतावलम्वी, सप्तपदार्थवादी बहुत्ववादी च। विशेषनामधेयः पदार्थोऽस्माकं विशेषः। यदनुसारेण भेदः शाश्वत एव। किमत्र भवता वक्तव्यम्?

**शङ्करः।** (सस्मितम्) वः।

**वैशेषिकः।** (सोपहासम्) पूर्ववन्मम मतवादस्याद्याक्षरमेव? अहो निर्बुद्धिता! हाः हाः हाः!

**शंकरः**। प्राज्ञवर ! नेदमुपहासविषयः। निगूढ़तमं सत्यमिदम्। ततोऽहं 'व'कारार्थं विवृणोमि, शृणोतु भवान्।

**वैशेषिकः** : अगत्या श्रोतव्यमेव।

**शंकरः**। एतदेव—"वः वः वः" ! वः वायुः वः जलम्, वः व्याघ्रः इति। ततोऽयं भेदवादः वायुवत् शून्यः, जलवत् तरलः व्याघ्रवद् भीषणश्च। यतस्तत्त्वमेकम् एव, ब्रह्म।

**पुरोहितः**। अहो अहो ! शुष्कमस्य पुष्पस्य वैशेषिकाभिमुखि चतुर्थदलम्।

**वैशेषिकः**। हा हतोऽस्मि मन्दभाग्यः !

**मीमांसकः**। अहं मीमांसामतावलम्वी, निरीश्वरवादी वहुत्ववादी च। तत्र भवान् पूर्वपूर्वावलम्बितां प्रणालीं परित्यज्य नूतनपथेन प्रश्नस्यास्य मीमांसां करिष्यतीत्यहमाशासे। मन्ये शिशुजनोचिता भवतः पूर्वतन-प्रणाली।

**शङ्करः**। ज्ञानिश्रेष्ठ ! आपात-दृष्ट्या या हि शिशुजनोचिता, वस्तुतः सैव हि गभीरार्थद्योतिका। ततः पुनरपि ब्रवीमि-"म"।

**मीमांसकः**। कोऽस्यार्थः ?

**शङ्करः**। एतदेव—मः मः मः। मः ब्रह्मा, मः विष्णुः, मः महेश्वरः। भवान् जगत्सत्यत्ववादी। भवन्मते जगतः सृष्टिस्थितिलयाः सन्ति। किन्तु निरीश्वर-वादानुसारेण कथं ब्रह्मकृत-सृष्टिः, विष्णुकृत-स्थितिः महेश्वरकृत-लयश्च सम्भवन्ति ?

**पुरोहितः**। अहो अहो ! शुष्कमस्य पुष्पस्य मीमांसकदिग्-दलम् !

**मीमांसकः**। हा हतोऽस्मि मन्दभाग्यः।

**जैनः**। अहं जैनमतावलम्वी, निरीश्वरवादी वहुत्ववादी च। अत्र प्रतिवदतु भवान्।

**शंकरः**। (सस्मितम्) "जः"।

**जैनः**। किम् अत्रापि मम मतवादस्याद्याक्षरमेव भवतः सम्वलम् ?

**शंकरः**। पण्डित-शिरोमणे ! अहं दीनहीन-जनः ततस्तदेव मम सम्वलम्।

**जैनः।** (आश्चर्यान्वितः) कोऽस्यार्थः ?

**शंकरः।** एतदेव—जः, जः, जः। जः जनकः, जः विष्णुः जः महेश्वरः। ततो निरीश्वर-वादानुसारेण जगतो जनकरूप-ब्रह्मकृत-सृष्टिः, विष्णुकृतस्थितिः महेश्वरकृत-लयश्च न सम्भवन्ति।

**पुरोहितः।** अहो! अहो! शुष्कमस्य पुष्पस्य षष्ठ-दलम्।

**जैनः।** हा हतोस्मि मन्दभाग्यः।

**बौद्धः।** अहं बौद्धमतावलम्वी, क्षणवादी वहुत्ववादी च। किमत्र भवतो मतम् ? मम मतस्याद्याक्षर-संवलितमुत्तरं श्रोतुमपेक्षे निरुपायोऽहम्। (हसति)

**शङ्करः।** गुणाधार! अहमपि निरुपायः। ततः पुनरपि ब्रवीमि, वः।

**बौद्धः।** अर्थमपि विवृणोतु।

**शंकरः।** एतदेव—वः, वः, वः। वः जलम् वः सागरः, वः वन्धनम् इति। ततो भवतो मतवादः जलवत् चपलः, सागरवत् उन्मत्तः, बन्धनवत् कर्कशश्च। क्षणवाद-वहुत्ववादौ परस्पर-विरोधिनौ, यतः प्रत्येकं वस्तु क्षणमात्र-स्थायि चेत्, कथं वहुवस्तूनामेकत्र स्थितिः सम्भवेत् ?

**पुरोहितः।** अहो अहो! शुष्कमस्य पुष्पस्य शिष्टमपि दलम्!

**बौद्धमतावलम्वी।** हा हतोऽस्मि मन्दभाग्यः।

**पुरोहितः।** आश्चर्यमाश्चर्यम्! सप्त-निमेषैः सप्त महारथा विजिताः। किमाश्चर्यमतः परम्!

**विजित-पण्डिताः।** जयः श्रीब्रह्मणो जयः, जयः श्रीशङ्कराचार्यस्य जयः। जयोऽद्वैत-मतस्य जयः।

**पुरोहितः।** इदानीं सर्वथैव भवान् दिग्विजयी। भवन्तं प्रणमामि। यथेच्छं मन्दिरं प्रविशतु भवान्। किन्तु,

सर्वज्ञता यस्य हि शारदाम्वया
नभोगिरा नैव विघोषिता भवेद्।
वादे स विद्वान् विजयी भवन्नपि
न पीठमारोढ़मिदं क्षमः क्वचित्॥१०१॥

शङ्करः। (बद्धाञ्जलिः) कृतकृतार्थोऽस्मि। जननि! श्रीशारदे! भवच्छ्रीपादपद्मे कोटिशः प्रणामाः।

(दैववाणी)

श्रीशारदा। वत्स शङ्कर! तव ज्ञानेन भक्त्या निष्काम-कर्मणा च प्रीतास्मि। अहं त्वां "सर्वज्ञ" नाम्ना भूषयामि। ततः सानन्दं मम सर्वज्ञ-पीठमारोह।

शंकरः। (गलदश्रु-नयनः) मातः! मातः! मातः! अपारा तव 'करुणा! स्वल्पज्ञः स्वल्पशक्तिः स्वल्पकृतिश्चाहम, तथापि त्वं सानुग्रहं मे 'सर्वज्ञ" इति रोमाञ्चकरं नाम दत्तवती। मातः! मातः! मातः! भावावेगेन निर्वाक् जातोऽहम्। (रोदिति)

श्रीशारदा। तात! कल्याणं ते भूयात्। जगतः अशेषं कल्याणं साधय निरन्तरम्।

शंकरः। (भावाविष्टः) अहं दीनहीनः क्षुद्रक्षीणः धन-जन-मान-विहीनो जनः—सर्वज्ञपीठमारोढ़ुं नाहं योग्यः। केवलं सर्वज्ञ-पीठ-दर्शन-स्पर्शनार्चनार्थं मम गभीरा मनोवाञ्छा। किन्तु अकारण-कृपावर्षिणी मम कुसुम-कोमला जननी। तस्या आदेशं शिरसि निधाय, सर्वज्ञां जननीं सर्वान् प्राज्ञवरांश्च प्रणम्य अहं ससम्भ्रमं सबहुमानं स-नमस्कारञ्च सर्वज्ञ-पीठमारोहामि। सर्वे कृपया मम भीत-नत-मस्तके आशिषो वर्षन्तु। यतः—

जलजनिरुपलभ्य प्रातरुष्णांशुरागं
विकशति दलपालीं दिक्षु यद्वद् वितत्य।
विकशति हि तथेदं जीवनाम्भोरुहं नः
सदय-समुदिताया आशिषः प्राप्य दीप्तिम् ॥१०२॥
वर्षतौ जलधारया मसृणया क्षेत्रं यथाऽनुर्वरं
शस्यं श्यामल-कोमलं जनयति प्रायः स्वयं कर्कशम्।
प्राणक्षेत्रमिदं कठोरमरसं धारामुपेत्याशिष-
स्तद्वत् सद्गुणराजि-पुष्पमचिरात् सन्दर्शयत्येव नः ॥१०३॥

अतुलो महिमा सोऽयमसीमो गरिमा तथा ।
अनुत्तमो मधुरिमा नाशिषोऽन्यत्र लभ्यते ॥१०४॥

**सर्वे ।** भद्र ! विजयी भवतु भवान् सर्वत्र । भवतो ज्ञानालोको दिशि प्रसरतु प्रदीप्तप्रभया निरन्तरम् । भवतः अरुण-किरणधरे तरुणजीवने मा भूत् लेशमात्रापि कलङ्कलेखा । श्रीशङ्करावतार श्रीशङ्कर ! शं करोतु भवान् शङ्का-सङ्कोच-सङ्कटसङ्कुल-संसारस्य सानन्दम् ।

**शंकरः ।** ( वद्धाञ्जलिः ) कृतकृतार्थोऽस्मि ।

**पुरोहितः ।** मन्ये भवतः शुभ-दिग्विजय-यात्रा सर्वज्ञ-पीठारोहण-क्षण एव समाप्ता सार्थिका च भविष्यति । यः सर्वज्ञया श्रीशारदादेव्यैव "सर्वज्ञ" रूपेण नन्दितः, पृथिव्यां कस्तं विजेतुं शक्नोति ?

**शंकरः ।** धन्योऽस्मि ।

**सर्वे ।** श्रीसर्वज्ञ-देव्या जयः, जयः श्रीसर्वज्ञ-पीठस्य जयः, जयः श्रीसर्वज्ञा-कृपाधन्य-श्रीशंकराचार्यस्य जयः ।

[ इति एकादश-दृश्यम् ]

—०—

## द्वादश-दृश्यम्

[ शंकरस्य दिग्विजये तान्त्रिकविजयः ]

**स्थानम्**—प्राग्ज्योतिष ( कामरूप ) पुरम् ।

**समयः**—सन्ध्या ।

( ततः प्रविशति सशिष्यस्तान्त्रिकश्रेष्ठः अभिनवगुप्तः )

**अभिनवगुप्तः ।** ( हर्षोत्फुल्लः ) अहं प्रवल-पराक्रान्तः पण्डितप्रवरस्तान्त्रिकश्रेष्ठः श्रीलश्रीयुक्तः अभिनवगुप्तमहोदयः । को मां जेतुं समर्थः ? अहो महानन्दः ! अहो महाविजयः ! अहो महागर्वः ! सुकठिन-रोगग्रस्तो

मरणापन्नो महामहिममयो दिग्विजयी पण्डित-धुरन्धरोऽस्माकं गुरुवरः श्रील-श्रीयुक्त-शंकराचार्यमहोदयः। हाः हाः हाः !

**शिष्यः।** अपि सत्यम् ? किन्तु कथम् ?

**अभिनवगुप्तः।** मदर्थं वत्स ! मदर्थम्। अपि न जानासि यत् स सातिशय-स्पर्धाशीलः अकाल-कूष्माण्डः असमसाहसः सभायां सर्वजनसमक्षं मां पराजितवान् ?

(सरोषम्) अहो गगनस्पर्शि तस्यौद्धत्यम् ! अर्वाचीनो बालकोऽपि स मया सह योद्धुं प्रवृत्तः ? समुचिता शास्तिस्तेन प्राप्ता अचिरेण। हाः हाः हाः !

**शिष्यः।** गुरुदेव ! कथं तत् संघटितम् ? श्रोतुमुत्सुकोऽहम्।

**अभिनवगुप्तः।** शृणु। पराजयानन्तरमहं छलनामाश्रित्य तस्य मूर्खस्य शिष्यत्वं वृतवान्। विगलित-हृदयः स गर्दभश्रेष्ठो मां स्वपरिचर्यार्थं नियुक्त-वान्। सप्ताहेन ममाभ्यस्तया अभिचार-क्रियया अहं तस्य पूत-देवशरीरे भीषण-रोगवीजं निक्षिप्तवान्। ततश्च,

**अङ्गादङ्गादुत्सरन्ति प्रकामं दुर्गन्धासृक्पूयधारा गुरोर्मे।**
**आविर्भूताः सन्ति लोम्नां मुखेभ्यो घोराकारा दुष्टविस्फोटकाश्च ॥१०५॥**

हाः हाः हाः ! पश्य तात ! पश्य, तेषामुत्तुङ्ग-ब्रह्मविद्यातोऽपि अस्माकं हीनातिहीन-तन्त्रविद्या सहस्र-कोटिगुणेन प्रबलतरा। हाः हाः हाः।

**शिष्यः।** हाः हाः हाः ! अजेयः खल्वस्माकं गुरुदेवः।

**अभिनवगुप्तः।** प्राणप्रिय ! तूष्णीम्भव। इत आयाति सनन्दनसहितः श्रीशङ्कराचार्यमहोदयः। दुर्जनसम्राट् अयं सनन्दनः।

(ततः प्रविशति सनन्दन-सहितः शङ्करः)

**अभिनवगुप्तः।** गुरुदेव ! प्रणमामि भवन्तम्।

**शंकरः।** कल्याणं ते भूयात्। वत्साः ! मरणापन्नोऽहम्। किन्तु तेन किम् ? अनित्यः खल्वयं जड़-देहः। तस्य विनाशेऽपि आत्मा न विनश्यति। ततः प्राणप्रिय सनन्दन ! मा शोचीः।

नास्त्यात्मन्यजरेऽमरे गतभयेऽशोके मनोदेहयो-
र्मुद्रा काधि ततो न शोचति तनोः पीड़ादिभिः स क्वचित्।
देहान्तेऽपि न लुप्यते न च मनोधर्मैर्विषादोत्सव-
क्लेश-द्वेषमुखैर्मनोरथशतैः संसृज्यते निष्कलः ॥१०६॥

**सनन्दनः।** (क्रन्दनपरः) न हि नहि गुरुदेव! न अस्मान् परित्यज्य ब्रह्मलोकं गच्छतु भवान्। भवता विना न मुहूर्तमपि प्राणान् धारयितुं समर्था वयम्। श्रीगुरुदेव! अस्य प्रतिकारः अवश्यमेव मया करणीयः।

**शंकरः।** कं प्रतिकारं त्वं कर्तुं पारयसि? न पर्याकुलो भव; वत्स! भवितव्यं भविष्यति। ततः शान्तो भव।

**सनन्दनः।** देवदेव! भवान् गृहाभ्यन्तरं गत्वा विश्रामं लभतां निश्चिन्तम्। सर्वा व्यवस्था मयैव करणीया सुष्ठुरूपेण।

**शंकरः।** यथा त्वमिच्छसि तात! अहं गच्छामि। अतुलनीया तव गुरुभक्तिः, अपरिसीमा च गुरुसेवा। (प्रस्थितः)

**सनन्दनः।** (अभिनवगुप्तमुद्दिश्य सरोषम्) कोमल-हृदयगुरुदेवस्य सम्मुखे अहं क्लेशेन धैर्यमवलम्बितवान्। किन्तु रे रे वर्वर! अधुना मम हस्ते तव निधनम् अपरिहार्यम्।

**अभिनवगुप्तः।** (छलमाश्रित्य) किन्तु भ्रातः! कथं त्वम् अकारणं मयि कुप्यसि? किमहं कृतवान्?

**सनन्दनः।** (सोपहासम्) किमहं कृतवान्? अहो! निर्दोषो निष्कलङ्क एष पारिजातपुष्पसमः!

**अभिनवगुप्तः।** प्रिय भ्रातः! नाहं श्रीभगवान्, पीड़ाजनने का मे शक्तिः?

**सनन्दनः।** (सरोषम्) रे रे भण्ड! रे रे पाषण्ड! निश्चितं त्वं न भगवान् किन्तु दुरन्त-दानवः प्रचण्ड-पिशाचः। ज्ञातवानहं सर्वं वृत्तान्तं मम इष्टदेवात् श्रीनृसिंहात्।

**अभिनवगुप्तः।** (सोद्वेगम्) कथं कथम्?

**सनन्दनः**। शृणु रे दुराचार! श्रीगुरुदेवस्य तादृशीं मरणापन्नावस्थां दृष्ट्वा अहं रात्रिदिनम् इष्टदेवतासकाशे मम हृदयोत्थां प्रार्थनां निवेदितवान्— "देवदेव! मम प्राणाञ्जलिं कृपया गृहीत्वा गुरुदेवस्य प्राणान् रक्षतु भवान्" इति। ततः परमकृपालुः स स्वप्ने आविर्भूय मां कथितवान् आद्योपान्तं वृत्तान्तम्।

रे रे पापिष्ठ! रे रे निष्ठुर! श्रीगुरुदेवस्य पीड़ा त्वत्कृता, तव पापाचार-कृता, तव जिघांसामूलकाभिचारक्रियाकृता।

**अभिनवगुप्तः**। अलीकम् अलीकमेतत्।

**सनन्दनः**। देववाक्यं नालीकं कदापि। अलीकस्तवाचारव्यवहारः। किन्तु प्रस्तुतो भव। तवापि मरणं सुनिश्चितमेव ममैव हस्ते।

**अभिनवगुप्तः**। (सभयम्) किं किं त्वं करिष्यसि?

**सनन्दनः**। तव मरणमन्त्रो मया प्राप्तः इष्टदेवात्। ततस्तव परित्राणं नास्ति।

**अभिनवगुप्तः**। (सरोषम्) ममाप्यस्ति मन्त्रः, ममाप्यस्ति इष्टदेवः। तन्मन्त्रेणाहमपि त्वां मारयिष्यामि। सावधानो भव।

**सनन्दनः**। रे रे दुर्वृत्त! रे रे कृकलास!

**अभिनवगुप्तः**। रे रे स्पर्धाशील! रे रे कृमिकीट!

**सनन्दनः**। मम मन्त्रशरं निक्षिपामि—

ओं ब्रह्म ओं ब्रह्म ओं ब्रह्म केवलं
ब्रह्म प्राणाः ब्रह्म मनः ब्रह्म सकलम्।
ब्रह्म विभु ब्रह्म प्रभु जगत्तारणं
ब्रह्म वरं ब्रह्म परं मोक्षकारणम्॥१०७॥

**अभिनवः**। होः होः होः! किमयं मन्त्रः अथवा शिशु-वचनम्? शृणु रे मूढ़! उच्चारयामि मम प्रचण्ड-प्रबल-प्रखर-मन्त्रं तव मारणास्त्ररूपेण—

ओं पिशाचो रुधिरपायी कङ्कालधरः
ओं दानवः श्मशानशायी यमकिङ्करः।

**ओं राक्षसो हिंस्रदंष्ट्रो नरकसञ्चारः**

**ओं निशाटो लोलितजिह्वः प्रलयङ्करः ॥१०८॥**

अहो अहो ! मम मन्त्रः पराजितः, असम्भवोऽपि सुसम्भवो जातः। हा हा हा ! सर्वाङ्गेषु वृश्चिकज्वलनम्, सर्वाङ्गेषु यमयन्त्रणम्, सर्वाङ्गेष्वग्नि-दहनम्। अहो ! असहनीयमेतत्।

**अभिनवगुप्तशिष्यः।** हा हा हा, गुरुदेवस्य सर्वशरीरादुत्सरन्ति अकस्मात् दुर्गन्ध-पूय-रक्तस्रोतांसि, सर्व-लोमकूपेभ्य आविर्भवन्ति अकस्माद् विषाक्त-विस्फोटकाः ; सर्व-शिरामुखेभ्य उत्क्रामन्तीव अकस्मादनलप्रवाहाः। किं किं संघटितम् ?

**अभिनवगुप्तः।** मम मरणमेव समुपस्थितम्। कृतकर्मणः फलमेतत्। परम-करुणाघन शंकर ! क्षमतां मां कृपया भवान्। ( मृतः )

( ततः प्रविशति शंकरः )

**शङ्करः।** वत्स सनन्दन ! अत्याश्चर्यम् अत्याश्चर्यम् ! मुहूर्तेन जातं मम सर्वशरीरं विपुल-विस्फोटकमुखम्। नीरोगोऽहं साम्प्रतम्। कथं कथम् ? ( इतस्ततो दृष्ट्वा ) अहो ! अपि मृतदेहोऽयम् ? कस्य ? अभिनवगुप्तस्य ? अविश्वास्यम् एतत्।

**सनन्दनः।** देवदेव ! भवतो रोगमुक्तिर्हि त्रिभुवनानन्दकारणम्।

**शंकरः।** किन्तु कथं तज्जातम् ?

**सनन्दनः।** भवतो दीन-हीन-शिष्यो न मायावी, तथापि तस्य मन्त्रबलेनैव इदं सर्वं संघटितम्। ( कर्णे कथयति )

**शङ्करः।** वत्स सनन्दन ! त्वं हि मम प्राणदाता, ममाशेष-धन्यवादार्हः। तथापि प्राणाधिक ! जीवनविनिमयेन जीवनलाभो न मम काम्यः, परन्तु परार्थं जीवनदानमेव मम जीवनव्रतम्।

**सनन्दनः।** आर्य ! नाकुलो भवतु भवान्। सर्वं महामायाया लीला केवलम्। असौ दुष्ट-जनः स्वकर्मफलानि भुङ्क्ते। भवतः को दोषः ? वरं ममाभिचार-मन्त्र एवास्य पापिष्ठस्य साक्षान्मरणकारणम्।

शङ्करः। (सोद्वेगम्) तवाभिचार-मन्त्रः? वत्स! ततो नरहत्या-रूपेण महापापेन तव प्रभात-शिशिरसमं निर्मलं जीवनं कलङ्कितं मदर्थमेव? अहो किं संघटितम्? एतस्मान्मरणमपि वरं मम।

सनन्दनः। प्राणप्रतिम गुरुदेव? नोद्विग्नो भवतु नाम भवान् मदर्थम्। यदि भवान् स्वेच्छया समाधियोगेन प्राणान् अत्यक्ष्यत् तदा तदस्माकं सहनीयमभविष्यत्। किन्तु दुरात्मजनकृताभिचारक्रियया भवत्सदृशस्य विश्वललामभूतस्य महापुरुषस्य अकालमरणं सर्वथा असहनीयम्। ततो निरुपायेण मया प्रत्यभिचार-क्रियाऽवलम्बिता दुष्ट-तान्त्रिकस्य जीवननाशार्थं भवतो जीवनरक्षार्थञ्च।

शङ्करः। (सस्नेहम्) किन्तु तात! त्वं पापलिप्तो जातो मदर्थम् इत्येव मम महादुःखकारणम्।

सनन्दनः। गुरुदेव! यद्यहं पापलिप्तः, भवतु तत्, भवतु तत्। आर्य! भवदर्थमहं नरकमपि सानन्दं गमिष्यामि। गुरुदेव! भवत एकोऽपि अश्रुकणः मम जीवनं मज्जयति उत्ताल-शोक-सागररूपेण, भवत एकोऽपि शोणितविन्दुः मम प्राणान् मथ्नाति उन्मत्त-स्फटिकावर्तरूपेण। श्रीगुरुवर! भवान् न जानाति किल, किं भवान् ममेति। भवान् मम प्राणाः, मम मनः, मम आत्मा, मम एषणा, मम साधना, मम आराधना च। मम समग्र-जीवनं भवदर्थमेव, भवदर्थं केवलम्।

श्वासोच्छ्वासौ घ्राणयोर्मे त्वमेव
देहे प्राणाः स्पन्दनं हृद्गुहायाम्।
रक्तस्रोतो धावमानं धमन्यां
देहप्राणास्त्वां विना मे वृथैव ॥१०९॥ (इति रोदिति)

शंकरः। प्राणाधिक! मा रुदिहि। तव गुरुभक्तिर्जगति अतुलनीया एव। एतदर्थं त्वं शाश्वत-सिद्धिं लप्स्यसे सुनिश्चितम्।

किन्तु वत्स! पृथिव्यां कोऽपि न नष्टः, न दुष्टः, न पापिष्ठः, न निष्ठुरो वा, यतः सर्वे एव ब्रह्म।

अत आगच्छ, सर्वे वयमस्य श्रद्धेय-मृतजनस्य कल्याणार्थं प्रार्थयामहे।

समाप्तं द्वादश-दृश्यम्

—:०:—

## त्रयोदश-दृश्यम्

[ शङ्करस्य दिग्विजये नेपालविजयः ]

**स्थानम्**—नेपालस्थ-पशुपतिमन्दिरम् ।

**समयः**—प्रभातम् ।

( ततः प्रविशति सशिष्यः शङ्करः )

**शंकरः ।** ( शोकाभिभूतः ) अहो सुप्रसिद्धस्य श्रीपशुपतिमन्दिरस्य ईदृशी दीनदशा ? जीर्णं मन्दिरम् अपरिष्कृतम् अङ्गनम् अवहेलितः अपूजितश्च देवविग्रहः । अहो ! देवावमानना असहनीया । पद्मपाद सनन्दन ! आनय सम्मार्जनीम्, सुरेश्वर ! आनय जलम्, हस्तामलक ! आनय पुष्पाणि, आनन्दगिरे ! आनय प्रदीपान् । अहं स्वहस्तेन श्रीमन्दिरं परिष्कृत्य देवतां पूजयिष्यामि ( सम्मार्जनोद्यतः ) ।

**सनन्दनः ।** देव ! विरमतु भवान् । अहमेव मन्दिरं सम्मार्जयामि । न भवान् क्लेशमाप्नुयात् ।

**शंकरः ।** क्लेशः ? भगवन्मन्दिरस्य मलोऽपि अमलः, तत्स्पर्शेनापि महापुण्यम् । अहं महापुण्यशाली, यतोऽहं श्रीपशुपतिनाथस्य पुण्य-मन्दिरं मार्जयितुं सुयोगं लब्धवान् ।

देवमन्दिरं हि—

मोक्षस्य सोपानमतिप्रशस्तं
हृद्वर्ति-भक्तेरतनुः प्रतीकः ।
पुण्या क्वविर्जीवन-साधनाया
देवालयस्तेन हि पालनीयः ॥११०॥

कलुषितं तमिमं विदधाति यः
कलुषितो भवति स्वयमेव सः ।
तमवधीरयतो निजजीवनं
भवति हन्त चिरादवधीरितम् ॥१११॥

( मन्दिरं परिष्कृत्य ) प्राणप्रियाः ! कुरुत श्रीपशुपतिस्तुतिम् ।

शिष्याः । ( श्रीपशुपतिवन्दना )

भजामि भर्गं भरितस्वर्गं
भङ्गुर-संसारधरम् ।
विलसित-वैभव—भीषण-भैरव-
भागीरथीवलहरम् ॥११२॥
भयद-भूतेश-सर्पिल-सुवेश-
भीम-भवार्णवपारम् ।
भजामि भर्गं जित-गुणवर्गं
भास्वर-भास्कर सारम् ॥११३॥

( ततः प्रविशन्ति वेगेन कतिपये वामाचारि-बौद्धश्रमणाः )

**प्रथमः** । वामाचारिबौद्धश्रमणा वयं नेपाल-देशस्य वस्तुतः सम्राजः । अस्माकं निर्देशादेव पुत्तलिकापूजा नेपालदेशे निषिद्धा । कस्त्वं पुनस्तामारब्धुम् ? असीम-स्पर्धाशीलस्त्वम् । पदाघातेन तव पुत्तलिकाविग्रहं विचूर्णयिष्यामो निमेषेण ।

**द्वितीयः** । हाः हाः हाः ! कीदृग्वा रूपं तव श्रीपशुपतेः । दीन-भिक्षुकसमार्धनग्न-भस्ममलिनदेहः, नीच-विषवैद्यसम-सर्प-शवलशिराः, भूत-प्रेतसहचरः स सर्वेषां निन्दाभाजनम् उपहास-पात्रं केवलम् । हाः हाः हाः ।

**तृतीयः** । होः होः होः ! कीदृशी वा शक्तिस्तव श्रीपशुपतेः, गरलपायी स स्वयं गरलसमः कूटकौशली, अथ च नास्ति तस्य कापि शक्तिर्जगद्धारणाय । अस्माकं वामाचारमन्त्रा युष्माकं देवादिदेवं महादेवं निमेषात् फुत्कारेण बुद्बुदवत् स्फोटयितुं समर्थाः, हाः हाः हाः ।

**शंकरः** । भद्राः ! देवनिन्दनं महापापम् । भवन्तो बौद्धनामधारिणः । अवतारवरिष्ठस्य करुणाघनस्य श्रीबुद्धस्य पुण्यनामधन्या भवन्तः परधर्मान् निन्दन्ति चेत् तस्य विश्वप्रीति-विश्वमैत्री-विश्वशान्तिमूलिका शिक्षा निष्फला भविष्यति । ततो विरमन्तु विरमन्तु भवन्तः कृपया ।

**प्रथमः।** (सरोषम्) रे रे पाण्डित्याभिमानिन् दुग्धपोष्य-बालक! नास्मान् तत्त्वकथं श्रावय। नोत्तेजय भीषणान् सिंहान्। प्राणान् धारयितु-मिच्छसि चेत् पलायस्व मुहूर्तेन अस्मात् स्थानात्।

**द्वितीयः।** रे रे गर्वोन्मत्त-जन! कस्त्वामत्र पशुपतिपूजार्थम् आदिष्ट-वान्?

(अकस्मात् प्रविशति सपारिषदो नेपालराजः)

**नेपालराजः।** अहम् अहमेव आदिष्टवान्। (सर्वे चकिताः)

**नेपालराजः।** अहम् अहमेव! किन्तु न आदिष्टवान् परं सानुनयम् अनुरुद्धवान्। श्रमणाः! न जानन्ति भवन्तः क एषः। एष दिग्विजयी पण्डितः श्रीशङ्कराचार्य-महोदयः। नेपाल-देशवासिनां साग्रहानुरोधात् स बहुदूरदेशात् बहुक्लेशेन श्वापदसङ्कुलसुविस्तीर्णारण्यानि अतिक्रम्य दुरारोह-पर्वतान् उल्लङ्घ्य चात्रागतः अस्माकमुद्धारार्थम्। गुरुवर! प्रणमामि।

यत् कोटिवारमुपगम्य सुतीर्थराजं
सर्वादृतं सुकृतमेति नरो यतात्मा।
गत्वैकमाश्रमपदं सकृदेव साधो-
राप्नोति तन्निखिलमेव विना श्रमेण ॥११४॥

यत् कोटि-कोटीः सुरविग्रहाणां
दृष्ट्वाऽक्षयं पुण्यमुपैति लोकः।
एकस्य साधोः सकृदीक्षणेन
ततोऽधिकं पुण्यफलं समेति ॥११५॥

पुराणानि वेदान् षडङ्गैः समेतान्
समाकर्ण्य पुण्यं यदाप्नोति धन्यम्।
तदाप्नोति साधोर्वचः किञ्चिदेकं
नरः कर्णरन्ध्रे सकृत् सन्निवेश्य ॥११६॥

**शंकरः।** कल्याणं ते भूयात्। किन्तु महाराज! राजा भवान् देशस्य।

राजा धर्मपालकः स्यात् प्राथम्येन । त्वत् भवति विद्यमानेऽपि कथं सुप्रसिद्ध-पशुपतिमन्दिरस्य इयं शोचनीया दशा ?

**राजा ।** देव ! एतन्मम दौर्बल्यस्य फलम् । इमे वामाचारिबौद्ध-श्रमणाः साम्प्रतमत्र प्रबल-प्रतापान्विताः । एतैः सह विरोधाय नाहं स्पर्धे ।

**प्रथम-श्रमणः ।** (सरोषम्) राजन् ! दुर्बल-जनस्य मुखे ईदृशी प्रगल्भता न शोभते । यदि भवान् दुःसाहसमवलम्ब्य अस्माभिः सह विवदेत तर्हि अयं ब्रह्मज्ञानधन्यो बालको भवन्तं रक्षितुं न शक्नुयात् कदाचन । न जानाति किल भवान् यत् वामाचारविद्या ब्रह्मविद्यातो लक्षगुणं प्रखरतरा, प्रबलतरा, प्रकृष्टतरा प्रख्याततरा च ? किं प्रमाणं वाञ्छति भवान् ? अस्माकं भीषणो मारणमन्त्रो निमेषेण अस्यार्वाचीनस्य शिरश्छेदं करिष्यति । पश्यतु भवान् पश्यतु ।

**नेपालराजः ।** (सभयम्) श्रमणवर ! कृपया विरमतु भवान्, नोच्चारयतु मारणमन्त्रम् । भवतां सेवार्थम् अहं बहुमूल्यान् उपहारान् प्रेरयिष्यामि अचिरेण ।

**सनन्दनः ।** (विहस्य) महाराज ! न पर्याकुलो भवतु भवान् । पापचारिणां मन्त्राः श्रीगुरुदेवे निर्वीर्याः । अत्र बहु-प्रमाणानि अस्माभिः प्राप्तानि ।

श्रमणवर ! मन्त्रप्रयोगं कुरु सानुग्रहम् । उत्सुका वयम् ।

**द्वितीयः ।** रे रे मूढ ! ततो मरणमेव तव प्राप्यम् । अवहितो भव ।

(मारणमन्त्रमुच्चारयति)

डाकिनि प्राणघातिनि जहि रिपून् कोपिनि !
योगिनि भवनाशिनि पिब रक्तं लोभिनि !
दानवि शतदशने ! चर्व शिरः शोषिणि !
पिशाचि ! खरवदने ! लीढि शवं मोहिनि ! ॥११७॥

**नेपालराजः ।** (सोद्वेगम्) हा हा हा ! न जाने किं संघटिष्यते साम्प्रतम् ।

**शंकरः।** श्रमणवर ! भवतो मन्त्राः न मन्निकटमागन्तुं समर्थाः। केवलं बहुदूरवर्तिनां तेषां सामान्यतमं दुर्गन्धम् उत्तापञ्च अहमनुभवामि। तेन मम किं ? ततः कृपया विरम निमेषात्। अन्यथा भीषणस्वभावा निष्ठुरा मन्त्रा निष्फलतारूपापमानलोपाय मन्त्राधिकारिणो भवत एव विनाशयिष्यन्ति ध्रुवम्।

**वामाचारिबौद्धश्रमणाः।** सत्यं सत्यम्। अहो ! वयमेव मन्त्राभिभूताः, वयमेव मरणग्रस्ताः। अतः पलायनमेव वरम्। (पलायिताः)

(ततः प्रविशन्ति बहवो नेपालदेशवासिनः पण्डिता अपरे च)

**सर्वे।** जयः श्रीशङ्करस्य जयः। जयः श्रीनेपालाधीशस्य जयः।

**प्रथम-पण्डितः।** भवान् भुवनत्राता शाश्वत-भारतीय-संस्कृति-धाता च। भवतः श्रीमुखाद् वयं तत्त्वोपदेशं वाञ्छामः सौत्सुक्यम्।

**शंकरः।** उपदेशस्य का कथा ? भवतामात्मैव उपदेष्टा, न गुरुः। तत आत्मोपलब्धये यतध्वम्, आत्मोपलब्धिर्हि ब्रह्मोपलब्धिः।

**नेपालराजः।** समग्र-नेपालदेशवासिनां पक्षतः अहं भवतः श्रीचरण-कमलेषु पुनः पुनः प्रणतोऽस्मि। भवान् सत्यमेव दिग्विजयी। वयं भवत-श्चिरविजिता दासानुदासाः। (इति पादयोः पतति)

**शंकरः।** (सस्नेहम्) उत्तिष्ठतु भवान्, उत्तिष्ठतु। भवन्तो न मम दासाः परन्तु मम बान्धवाः, मम आत्मीयाः, मम सहायकाः। भवन्तु भवन्तो भीमभवार्णव-भयभाररहिता निरन्तरम्।

**समाप्तं त्रयोदश-दृश्यम्**

—०—

## चतुर्दश-दृश्यम् ( अन्तिम-दृश्यम् )

### [ शङ्करस्य महासमाधिः ]

**स्थानम्**—केदारधामस्थ-केदारनाथमन्दिरम् ।

**समयः**—मध्याह्नः ।

( ततः प्रविशति सशिष्यः शङ्करः )

**शंकरः।** ( भावाविष्टः केदारनाथं स्तौति )

( श्रीकेदारनाथस्तुतिः )

केदारनाथः केदारनाथः केदारनाथः केवलम् ।
महादेव-शिवो महादेव-शिवो महादेव-शिवः सम्बलम् ॥११८॥

**सनन्दनः।** अहो ! अकस्मात् निःसरति मम गुरुदेवस्य सर्वशरीरात् काचन भागवती द्युतिः। प्रभात-भास्करवत् प्रदीप्तं तस्याननं समुज्ज्वलमपि न प्रखरं, परं स्निग्धं कोमलं, सरसम् । अहो ! तस्यामृतवर्षिनयनद्वयस्य दृष्टिरूर्ध्वमुखी ब्रह्मलोकानुसारिणीव लक्ष्यते। तस्य कृताञ्जलि-पुटौ हस्तौ स्थिरं निर्दिशत इव दूरातिदूरं दिव्यपथं मोक्षस्य । कथम् ? कथम् ? न जाने किमद्य संघटिष्यते !

( व्याकुलः ) गुरुदेव ! गुरुदेव !

**शंकरः।** ( अश्रुत्वा ) ओं ब्रह्म ओं ब्रह्म ओं ब्रह्म ।

**सनन्दनः।** गुरुदेव ! प्रणता वयं भवतः श्रीचरणारविन्दतले, कृपया सुधादृष्ट्या अस्मान् पश्यतु भवान्, पश्यतु ।

**शंकरः।** ( पूर्ववत् ) ओम् आत्मा ओम् आत्मा ओम् आत्मा ।

**हस्तामलकः।** ( साश्रुनेत्रः ) गुरुदेव ! गुरुदेव ! संसार-मरुभूम्यां तृषिता वयम्—कृपया वचनामृतेन अस्मान् सञ्जीवयतु भवान् सञ्जीवयतु ।



**शंकरः।** ( पूर्ववत् ) ओं शक्तिः ओं शक्तिः ओं शक्तिः ।

**हस्तामलकः।** ( रोरुद्यमानः ) गुरुदेव ! गुरुदेव ! संसारारण्ये-दावानलदग्धा वयम्—कृपया पीयूषस्पर्शेन अस्मान् शीतलयतु भवान् शीतलयतु ।

**शंकरः।** ( पूर्ववत् ) ओं माता ओं माता ओं माता ।

**सनन्दनः।** ( व्याकुलः ) अहो ! किं वयं करिष्यामः ? श्रीगुरुरस्मान् हित्वा ब्रह्मलोकं प्रस्थित आत्मना, केवलं तस्य पुण्यदेहोऽत्र वर्तते । अहो ! किं वयं करिष्यामः ?

**सुरेश्वरः।** भवतु, वयं श्रीकेदारनाथं वन्दामहे ।

नमामि चन्द्रं प्रणवानन्दं
　　धराहृदयारविन्दम् ।
विश्व-चन्दनं निःस्व-नन्दनं
　　ओंकार-नादविन्दम् ॥११६॥
नव-धर्मधरं भव-मर्मचरं
　　मथित-मनोमकरन्दम् ।
शोकभञ्जनं लोकरञ्जनं
　　विलसित-परमानन्दम् ॥१२०॥

**शंकरः।** ( समाधिस्तरादवरुह्य ) अहो ! के नु गायन्ति सुमधुरां हरगीतिम् ? रोमाञ्चितं मम सर्वशरीरम् । ( इतस्ततो दृष्ट्वा ) ताताः ! कथं यूयं क्रन्दनपराः ? किं संघटितम् ?

**सनन्दनः।** न किमपि, न किमपि । गुरुदेव ! नीद्विग्नो भवतु नाम भवान् । वयं सम्पूर्णं सुस्था जाता भवद्वाक्यश्रवणात् ।

**शंकरः।** वत्साः ! भवितव्यं भविष्यति सर्वदा, भवितव्यं भविष्यति सर्वथा । प्राणाधिकाः ! न स्मरथ किल यूयं यदद्य मम जन्मदिवसः, अद्याहं पूर्णद्वात्रिंशद्वर्षो जात इति ?

**आनन्दगिरिः।** हा हा हा ! गुरुदेवस्य आयुष्कालो द्वात्रिंशद्वर्षमात्र-परिमितः ।

**सनन्दनः।** हा हता वयं मन्दभाग्याः। किं वयं करिष्यामः ? हा हा हा ( इति रोदिति )।

**शंकरः।** वत्साः ! शोकाकुला न भवत। ताताः ! धैर्यमवलम्बध्वम्। नश्वर-देही नश्वर-जगतो विलीयते चेत् का क्षतिः, का वा भीतिः ? किन्तु मम सर्वजीवनव्यापिनी शिक्षा मा भून्निष्फला मम प्राणप्रियाणां मन्त्रशिष्याणां जीवने।

**सनन्दनः।** किन्तु गुरुदेव ! यद्यपि भवतैव सावधारणमुक्तम्—आत्मा शाश्वतः, आत्मा जड़देहभिन्नः, आत्मा ब्रह्म, तत आत्मनो विनाशो नास्तीति। तथापि आत्मनः सशरीरं पार्थिव-रूपम् अपि प्रयोजनीयम्। भवतः श्रीमुखदर्शनाद् विना श्रीपादस्पर्शनाद् विना श्रीवाणीश्रवणाद् विना कथं वयं जीविष्यामः ?

**शंकरः।** प्राणप्रियाः ! आत्मन उपलब्धिः शारीर-दर्शनस्पर्शन-श्रवण्येभ्यः कोटिगुणेन श्रेयसी। अतः तदर्थमेव यतध्वं ताताः !

**हस्तामलकः।** गुरुवर ! भवत उपदेशामृतसारं पुनः श्रोतुं वाञ्छामो वयम्।

**शंकरः।** उपदेशामृतसारः ? न हि न हि, नाहमुपदेष्टा। विशेषतो यूयं सर्वे ब्रह्म, ब्रह्म क उपदेष्टुं शक्नोति वा ?

**सुरेश्वरः।** तथापि भवान् अस्माकं शाश्वत-गुरुदेवः, अस्माकं संसार-सागरतरण-तरणीस्वरूपः अस्माकं जीवनालोकः, प्राणरसः शरीर-शरीरम्। भवतः साहाय्यं विना कथमस्माकं मोक्षलाभः सम्भवेत् ?

**शङ्करः।** "उद्धरेदात्मनात्मानम्" इति महती श्रीमद्भगवद्गीतावाणी। "आत्मदीपो भव" इति भगवतो बुद्धस्य चामृतमयी वाणी। ततो वत्साः ! यूयं सर्वे स्वं स्वम् आत्मानमेव पश्यत, स्वं स्वम् आत्मानमेव स्पृशत, स्वं स्वम् आत्मानम् एव शृणुत—गुरूपदेशस्य का कथा ?

प्राणप्रतिमाः ! का सा आत्मवाणी ? शृणुत यूयं सर्वे, शृणुत सावधानम्, शृणुत सानन्दं तां रोमाञ्चकारिणीं वाणीम्—"अहं ब्रह्मास्मि, अहं ब्रह्मास्मि, अहं ब्रह्मास्मि"।

एष हि सकल-शास्त्रस्य सारः, सकल-कामनायाः शान्तिः, सकल-साधनायाः सिद्धिः ।

बुद्धीन्द्रिय-प्राण-मनःशरीरै-
रेकान्तमुक्तः खलु जीव एषः ।
सुधाघनश्चिद् घन उज्ज्वलश्री-
र्निरञ्जनो ब्रह्म सनातनश्च ॥१२१॥
अहङ्कृतिर्ज्ञानवतां न चैषा
न कल्पनामात्रमिदं कवीनाम् ।
भावोद्गमो नैष हि भावुकानां
न स्वप्निनां स्वप्नविलासमात्रम् ।
प्रत्यक्षरं सत्यमिदं यथार्थ-
सत्यं तथा शाश्वत-सत्यमेव ॥१२२॥

**हस्तामलकः ।** गुरुदेव ! गुरुदेव ! रोमाञ्चितं मम सर्वशरीरं भवत उदात्त-गम्भीर-मधुर-वाणीश्रवणात् ।

**शंकरः ।** ( अनवहितः ) श्रूयते किल यत् सुदीर्घ-षोड़शवर्षान् व्याप्याहं दिग्विजयरतः । पञ्चोत्तर-सप्ततिसंख्यकाः संप्रदाया मया विजिताश्चेति । किन्तु वहुपूर्वमपि मयोक्तम्—नायं दिग्विजयः, नायं सम्प्रदायविजयः—अयं केवलम् आत्मविजयः, केवलं देहविजयः, केवलं संसारविजयः इति । समाप्ताः खलु मम विजयाः । मायावरणं छित्त्वाहं ब्रह्मालोकम् उपलब्धवान्, स एवालोको मया चतुर्दिक्षु विकीर्णः ।

**सुरेश्वरः ।** गुरुदेव ! गुरुदेव ! तवालोक एव संसारारण्ये सर्वेषां प्रदीपस्वरूपः ।

**शंकरः ।** पश्यत वत्साः ! ब्रह्मालोक एव सर्वत्र, ब्रह्मानन्द एव सर्वत्र ब्रह्मामृतम् एव सर्वत्र ।

**सनन्दनः ।** पश्यामो देव, पश्यामः । भवतश्चक्षुषी एव अस्माकं चक्षुषी ।

**शंकरः।** अयमेव अद्वैततत्त्वसारः—ब्रह्मैव सर्वत्र, ब्रह्मैव ब्रह्माण्डम्। एकतो ब्रह्मणो भिन्नं ब्रह्माण्डम् अन्यतो ब्रह्मणोऽभिन्नं ब्रह्माण्डं सत्यम्। वत्साः! भिन्न-दृष्टिं वर्जयित्वा अभिन्न-दृष्टिमाश्रयत। ततः का माया, किं मिथ्या—सर्वमेव निर्मलं सर्वमेव सत्यम्। वत्साः! न विस्मरत—अहं न मायावादी, अहं न मिथ्याश्रयो; अहं ब्रह्मवादी, अहम् आत्माश्रयी, ततोऽद्वैत-वेदान्तो न मायावादः, न मिथ्यावादः, किन्त्वक्षरशो ब्रह्मवादः, अक्षरश आत्मवादः।

ब्रह्म-ब्रह्माण्डयोरैक्यं ध्रुवं यदि भवेत् ततः।
ब्रह्म सत्यं जगन्मिथ्या ब्रह्म नित्यं जगत् क्षयि।
ब्रह्म पूर्णं जगच्छून्यं कथमेतद् भविष्यति?॥१२३॥

अत एव—

ब्रह्माण्डं तरु-गुल्म-धूलिकणिका-शष्पाम्बुबिन्द्वात्मकं
सर्वं ब्रह्ममयं ततश्च न घृणापात्रञ्च हेयञ्च वा।
किन्त्वेतत् परमादरार्हमपि च श्रद्धार्हमस्मिन् यतः
स्वादं ब्रह्मण आप्नुमः प्रथमतस्तद्भासमीक्षामहे॥१२४॥

**सनन्दनः।** अपूर्वः खल्वयं मतवादः।

**शङ्करः।** तथापि पारमार्थिक-स्तरे बद्धदृष्टयः सन्तः न यूयं व्यावहारिक-स्तरम् अवहेलयत नाम, यतो व्यावहारिक-स्तरः पारमार्थिक-स्तरस्य सोपान-स्वरूपः। ततो भक्तियोगं निष्काम-कर्मयोगञ्च न त्यजत—न त्यजत ईश्वर-पूजां मानव-सेवाञ्च। अद्वैत-वेदान्तस्तत्त्वतो विश्वात्मवादः, व्यवहारतो विश्वमैत्रीवादः।

**सनन्दनः।** धन्या वयं भवतो वाक्य-सुधापानेन।

**शङ्करः।** वत्साः! भारतवर्षस्य चतुर्षु प्रान्तेषु चत्वारो मठा मया स्थापिताः। तत्र द्वारकाधाम्नि शारदामठः, पुरीधाम्नि गोवर्धनमठः, विष्णु-प्रयागधाम्नि ज्योतिर्मठः रामेश्वर-धाम्नि च शृङ्गेरी-मठः। पद्मपादः सुरेश्वरः हस्तामलकः तोटकश्च क्रमेण तेषाम् अध्यक्षा भविष्यन्ति। तेषु यथाक्रमं सामवेद ऋग्वेदः अथर्ववेदो यजुर्वेदश्च विशेषेण पठितव्याः पाठयितव्याश्च।

**सर्वे ।** धन्या वयम् ।

**शंकरः ।** वत्साः ! विदायं दत्त सहास्यम् । गमनकाले न कुरुत मम स्वस्थानप्रत्यावर्तनपथम् अश्रुपिच्छिलम्, कुरुत तम् आनन्दोद्भासितम् ।

**सनन्दनः ।** ( अश्रूणि संवृत्य ) तथास्तु, गुरुदेव तथास्तु । सहास्य-मुखान् अस्मान् पश्यतु भवान् कृपया ।

**शंकरः ।** वत्साः प्राणप्रतिमाः ! युष्माकं श्रद्धा, युष्माकं सेवा, युष्माकम् आत्माहुतिश्च मम जीवनस्य सर्वश्रेष्ठ-पाथेया आसन् । अधुना जीवनत्याग-कालेऽपि ता मामनुगमिष्यन्ति मम श्रेष्ठसम्पद्रूपेण ।

**सुरेश्वरः ।** धन्या वयम् ।

**शंकरः ।** पश्यत पश्यत प्राणप्रियाः ! पूर्ण-मध्याह्न-समयोऽयम्, गगन-केन्द्रे विराजते भगवान् भास्करो दिशि दिशि कमनीयां कान्तिं विकीर्य । पश्यत पश्यत प्राणाधिकाः ! तस्य प्रसन्न-पवित्र-रश्मियुगलं धावति सानन्दं श्रीमन्दिरं प्रति । यदैव तत् श्रीविग्रहं माञ्च युगपत् स्प्रक्ष्यति तदैवाहं श्रीविग्रहस्य अङ्के विलीनो भविष्यामि सानन्दम्,

ओं ब्रह्म ओं ब्रह्म ओं ब्रह्म ।

**सर्वे ।** ओं ब्रह्म ओं ब्रह्म ओं ब्रह्म ।

**सनन्दनः ।** गुरुदेव ! किमहं भवतः प्रियं कर्तुं पारयामि ?

**शंकरः ।** इतोऽपि प्रियं स्यात् ? तथापि इत्थमस्तु—

( भरतवाक्यम् )

**अमलाशोको ब्रह्मालोको विकशतु गगने गगने**
**त्रिभुवन-लोभा ब्राह्मी शोभा विलसतु गहने गहने ।**
**भव-मकरन्दो ब्रह्मानन्दो निपततु भवने भवने**
**मानसभरणी ब्राह्मी वाणी निनदतु पवने पवने ॥१२५॥**

**ओं शान्तिः । ओं शान्तिः । ओं शान्तिः ।**

**समाप्तं चतुर्दश-दृश्यम् ।**

**समाप्तं चेदं शङ्कर-शङ्करं नाम नाटकम् ॥**

6. **Sahitya-Kana** Rs. 3·00
7. **Sanskritanka Roga.** Rs. 3·00

**Name of the Modern Sanskrit Dramas composed**
**By**
**( Dr. Roma Chaudhuri ) ( Rs. 7/each )**

1. **Yatindra-Yatindram** ( on the holy life of Dr. Jatindra Bimal Chaudhuri )
2. **Samkara-Samkaram** (on the holy life of Advaitacharya Sri Samkara)
3. **Desa-Dipam** ( on a nationalistic theme, on the holy life Jawans )
4. **Palli-Kamalam** ( on village Life of Bengal )
5. **Nagara-Nupuram** ( on Town Life )
6. **Sansaramritam** ( on Modern Life )
7. **Bharatacharyam** ( on the holy life of our revered Rastrapati Dr. S. Radhakrishnan )
8. **Abhedanandam** ( on the holy life of Swami Abhedananda, on the auspicious occasion of his holy Birth-Centenary )
9. **Nivedita-Niveditam** ( on the holy life of Sister Nivedita, on the auspicious occasion of her holy Birth-Centenary )
10. **Rama-Charita-Manasam** ( on the holy life of Saint Tulsidas )
11. **Yuga-Jivanam** (on the holy life of Sri Ramakrishna Paramahamsa Deva )
12. **Rasamaya-Rasamani** ( on the holy life of Rani Rasmani, )
13. **Prasanna-Prasadam** ( on the holy life of renowned Kali-Sadhaka of Bengal, Ramaprasad )
14. **Kavi-Kula-Kokilam** ( on the holy life of Mahakavi Kalidasa )
15. **Chaitanya-Chaitanyam** ( on the holy life of Sri Gauranga )
16. **Megha-Medura-Mediniyam** ( on the prior and later. unknown portions of the Megha-duta of Kalidasa )

17. **Gana-Devata-Natakam** (on the life the of renowned writer Sri Tarashankar Banerji )

18. **Agnivina-Natakam** ( on the life of Poet Kazi Najrul Islam )

19. **Kavi-kula-kamalam** ( on the later life of Mahakavi Kalidasa )

20. **Desa-Janakam** (on the holy life of Mahatma Gandhi, on the auspicious occasion of his holy Birth-Centenary. )

21. **Lenina-Vijayam** ( on the holy life of Lenin, on the auspicious occasion of his holy Birth-Centenary. )

22. **Bharata-Viram** ( on the holy life of Sri Shivaji )

23. **Tana-Tanu** ( on the holy life of Sri Tanasena )

( The above Sanskrit Dramas have been staged all over India and outside many times. **"Samkara-Samkaram"** was staged in Kathmandu, Nepal, under the auspices of Indian Embassy, in the benign presence of His Majesty, King Mahendra of Nepal and other members of the Royal Family.

**"Bharatacaryam"** was staged in Rastrapati Bhavan, New Delhi, in the benign presence of the revered Rastrapati Dr. Radhakrishnan, who donated Rs. 1500, to Pracya-vani as his blessings. By staging **"Kavi-Kula-Kokilam"**, Pracya-vani—for the first time for W. Bengal—won the coveted "Svarna-Kalasa" ( Golden Pitcher ) as First Prize in the All-India Kalidasa-Samaroha in Ujjain in November. 1967.